श्रीगणेशायनमः ॥ हरिः ॐ इषेत्वोर्जेत्वावायवस्थोपायवस्थदेवोवः
सविताप्रार्पयतुश्रेष्ठतमायकर्मणआप्यायध्वमघ्नियादेवभागमूर्जस्वतीः
पयस्वतीःप्रजावतीरनमीवाअयक्ष्मामावस्तेनईशतमाघशꣳसोरुद्रस्यहे
तिःपरिवोवृणक्तुध्रुवाअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि
॥ १ ॥ यज्ञस्यघोषदसिप्रत्युष्टꣳरक्षःप्रत्युष्टाअरातयःप्रेयमगाद्धिषणा
बर्हिरच्छमनुनाकृतास्वधयावितष्टातआवहंतिकवयःपुरस्ताद्देवेभ्योजु
ष्टमिहबर्हिरासदेदेवानांपरिषूतमसिवर्षवृद्धमसिदेवबर्हिर्मात्वान्वङ्मा
तिर्यक्पर्वतेराध्यासमाच्छेत्तातेमारिषंदेवबर्हिःशतवल्शंविरोहसहस्रव
ल्शाविवयꣳरुहेमपृथिव्याःसंपृचःपाहिसुसंभृतात्वासंभराम्यदित्यैरा
स्नासीन्द्राण्यैसंनहनंपूषातेग्रंथिंग्रथ्नातुसतेमास्थादिंद्रस्यत्वाबाहुभ्यामुद्य
च्छेबृहस्पतेर्मूर्ध्नाहराम्युर्वंतरिक्षमन्विहिदेवंगममसि ॥ २ ॥ शुंधध्वंदे

बहूनामसंदृशी ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे
इरावतीधेनुमतीहिभूतंसूयवसिनीमनवेयशस्ये ॥ व्यस्कभ्नाद्रोदसीविष्णुरेतेदाधारपृथिवीमभितोमयूखैः ॥ प्राचीप्रेतमध्वरंकल्पयंतीऊर्ध्वंयज्ञंनयतंमाजीव्हरतमत्ररमेथांवर्ष्मन्पृथिव्यादिवोवाविष्णवुतवा
पृथिव्यामहोवाविष्णवुतवांतरिक्षाद्धस्तौपृणस्वबहुभिर्वसव्यैराप्रयच्छदक्षिणादोतसव्यात् ॥ विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसियोअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णोररा
टमसिविष्णोःपृष्ठमसिविष्णोःश्नप्त्रेस्थोविष्णोस्स्यूरसिविष्णोर्ध्रुवमसिवैष्णवमसिविष्णवेत्वा ॥ ५ ॥ रक्षोहणोवलगहनोवैष्णवान्खनामीदमहंतंवलगमुद्वपामियन्नःसमानोयमसमानोनिचखानेदमेनमधरंकरोमि
योनःसमानोयोसमानोरातीयतिगायत्रेणछंदसावबाढोवलगःकिमत्रभद्रं

तन्नौसहविराडसिसपत्नहासम्राडसिभ्रातृव्यहास्वराडस्यभिमातिहावि
श्वाराडसिविश्वासांनाष्ट्राणाꣳहंतारक्षोहणोवलगहनःप्रोक्षामिवैष्णवान्
रक्षोहणोवलगहनोवनयामिवैष्णवान्यवोसियवयास्मद्द्वेषोयवयाराती
रक्षोहणोवलगहनोवस्तृणामिवैष्णवान्रक्षोहणोवलगहनोभिजुहोमिवै
ष्णवान्रक्षोहणौवलगहनावुपदधामिवैष्णवीरक्षोहणौवलगहनौपर्यूहा
मिवैष्णवीरक्षोहणौवलगहनौपरिस्तृणामिवैष्णवीरक्षोहणौवलगहनौवै
ष्णवीबृहन्नसिबृहद्ग्रावाबृहतीमिंद्रायवाचंवद ॥ ६ ॥ विभूरसिप्रवाहणोव
ह्निरसिहव्यवाहनःश्वात्रोसिप्रचेतास्तुथोसिविश्ववेदाउशिगसिकविरंघा
रिरसिबंभारिरवस्युरसिदुवस्वाञ्छुंध्यूरसिमार्जालीयःसम्राडसिकृशानुः
परिषद्योसिपवमानःप्रतक्वासिनभस्वानसंमृष्टोसिहव्यसूदऋतधामासि
सुवर्ज्योतिर्ब्रह्मज्योतिरसिसुवर्धामाजोस्येकपादहिरसिबुध्न्योरौद्रेणानी

दशस्थाप्सुषदोमहिनैकादशस्थतेदेवायज्ञमिमंजुषध्वं ॥ ओमासश्चर्षणी
धृतोविश्वेदेवासआगत ॥ दाश्वाꣳसोदाशुषःसुतं ॥ भूमिर्भूम्नाद्यौर्वरि
णांतरिक्षंमहित्वा ॥ उपस्थेतेदेव्यदितेग्निमन्नादमन्नाद्यायादधे ॥ आयं
गौःपृश्निरक्रमीदसनन्मातरंपुनः ॥ पितरंचप्रयन्सुवः ॥ त्रिꣳशद्धाम
विराजतिवाक्पतंगायशिश्रिये ॥ प्रत्यस्यवहद्युभिः ॥ अस्यप्राणादपा
नत्यंतश्चरतिरोचना ॥ व्यख्यन्महिषःसुवः ॥ सप्ततेअग्नेसमिधःसप्त
जिह्वाःसप्तर्षयःसप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजंतिसप्त
योनीरापृणस्वाघृतेन ॥ पुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपा
हिविश्वतः ॥ सहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्नियाविश्वत
स्परि ॥ चित्रावसोस्वस्तितेपारमशीय ॥१०॥ ममनामप्रथमंजातवेदःपि
तामाताचदधतुर्यदग्रे ॥ तत्वंबिभृहिपुनरामदैतोस्तवाहंनामबिभराण्यग्ने ॥

ममनामतवचजातवेदोवासंसीइवविवसानौयेचरावः ॥ आयुषेत्वंजीव
सेवयंयथायथंविपरीरदधावहैपुनस्ते ॥ नमोग्नयेप्रतिविद्धायनमोनाधृ
ष्टायनमःसंम्राजे ॥ अषाढोअग्निर्बृहद्वयाविश्वजित्सहंत्यश्रेष्ठोगंधर्वः ॥
त्वत्पितारोअग्नेदेवास्त्वामाहुतयस्त्वद्विवाचनाः ॥ संमामायुषासंगोप
त्येनसुहितेमाधाः ॥ अयमग्निःश्रेष्ठतमोयंभगवत्तमोयꣳसहस्रसातमः ॥
अस्मा अस्तुसुवीर्यं ॥ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञꣳसमिमंदधा
तु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेन ॥ पयस्वतीरोष
धयःपयस्वद्वीरुधांपयः ॥ अपांपयसोयत्पयस्तेनमामिंद्रसꣳसृज ॥
अग्नेव्रतपतेव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतां ॥ अग्निꣳहोतारमिह
तꣳहुवेदेवान्यज्ञियानिहयान्हवामहे ॥ आयंतुदेवाःसुमनस्यमानावि
यंतुदेवाहविषोमेअस्य ॥ कस्त्वायुनक्तिसत्वायुनक्तुयानिघर्मेकपालान्यु

पितृन्त्सुविदत्राँ अपीतियमेनयेसंधमादंमदंति ॥ मनोन्वाहुवामहेना
राशँसेनस्तोमेनापितृणांचमन्मभिः ॥ आनएतुमनःपुनःक्रत्वेदक्षाय
जीवसे ॥ ज्योक्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥
जीवंव्रातँसचेमहि ॥ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिँ
सिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यःप्रमुंचतुदुरितायानिचकृमकरोतु
मामनेनसं ॥ १२ ॥ यथासंति ॥ सुगंमेषायमेष्याअवांबरुद्रमदिमह्य
वंदेवंत्र्यंबकं ॥ यथानःश्रेयसःकरद्यथानोवस्यसःकरद्यथानःपशुमतः
करद्यथानोव्यवसाययात् ॥ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारु
कमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ एषतेरुद्रभागस्तंजुषस्वतेनावसे
नंपरोमूजवतोतीह्यवततधन्वापिनाकहस्तःकृत्तिवासाः ॥ प्रणोदेवीसर
स्वतीवाजेभिर्वाजिनीवती ॥ धीनामवित्र्यवतु ॥ आनोदिवोबृहतःपर्व

तादासरस्वतीयजतागंतुयज्ञं ॥ हवंदेवीजुजुषाणाघृताचीशग्मांनोवाचं
मुशतीशृंणोतु ॥ बृहस्पतेजुषस्वनोहव्यानिविश्वदेव्य ॥ रास्वरत्नानि
दाशुषे ॥ एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनमसाहविर्भिः॥ बृहस्पते
सुप्रजावीरवंतोवयꣳस्यामपतयोरयीणां॥१४॥इतिप्रथमाष्टकःसमाप्तः॥
भवतिसाहस्रीवाएषालक्ष्मीयदुन्नतोलक्ष्म्यैवपशूनवरुंधेयदासहस्रंपशू
न्प्राप्नुयादथैवैष्णवंवामनमालभेतैतस्मिन्वैतत्सहस्रमध्यतिष्ठत्तस्मादेषवा
मनःसमीषितःपशुभ्यएवप्रजातेभ्यःप्रतिष्ठांदधातिकोऽर्हतिसहस्रंपशून्
प्राप्तुमित्याहुरहोरात्राण्येवसहस्रꣳसंपाद्यालभेतपशवः ॥ त्यांनुक्षत्रि
याꣳअवआदित्यान्याचिषामहे ॥ सुमृडीकाꣳअभिष्टये ॥ वायोशतꣳ
हरीणांयुवस्वपोष्याणां ॥ उतवातेसहस्रिणोरथआयातुपाजसा ॥ सइ
ज्ञनेनसविशासजन्मनासपुत्रैर्वाजंभरतेधनानृभिः ॥ देवानांयःपितरमा

विवासतिश्रद्धामनाहविषाब्रह्मणस्पतिं ॥ ससुष्टुभासऋक्वतागणेनवलꣳ
रुरोजफलिगꣳरवेण ॥ बृहस्पतिरुस्रियाहव्यसूदःकनिक्रदद्वावशती
रुदाजत् ॥ १ ॥ मारुतमसिमरुतामोजोपांधाराम्भिन्धिरमयतमरुतःश्ये
नमायिनंमनोजवसंवृषणꣳसुवृक्तिं ॥ येनशर्धउग्रमवसृष्टमेतितदश्वि
नापरिधत्तꣳस्वस्ति ॥ पुरोवातोवर्षन्जिन्वरावृत्स्वाहावातावद्वर्षन्नुग्ररावृ
त्स्वाहास्तनयन्वर्षन्भीमरावृत्स्वाहानश्न्यवस्फूर्जन्दिद्युद्वर्षन्त्वेषरावृत्स्वा
हातिरात्रंवर्षन्पूर्तिरावृत्स्वाहावहुहायमवृषादितिश्रुतरावृत्स्वाहातपतिव
र्षन्विराडावृत्स्वाहावस्फूर्जन्दिद्युद्वर्षन्भूतरावृत्स्वाहामांदावाशाःशुन्ध्यूरजि
राः ॥ ज्योतिष्मतीस्तमस्वरीरुन्दतीःसुफेनाः ॥ मित्रभृतःक्षत्रभृतःसुरा
ष्ट्राइहमावत ॥ वृष्णोअश्वस्यसंदानमसिवृष्ट्यैत्वोपनह्यामि ॥ २ ॥ दे
वावसव्याअग्नेसोमसूर्य ॥ देवाःशर्मण्यामित्रावरुणार्यमन् ॥ देवाः

सपीतयोपांनपादाशुहेमन् ॥ उद्वोदत्तोदधिंभिंतदिवःपर्जन्योदंतरिक्षा
त्पृथिव्यास्ततोनोवृष्ट्यावत ॥ दिवांचित्तमःकृण्वंतिपर्जन्येनोदवाहेन ॥
पृथिवींयद्व्युंदंति ॥ आयंनरःसुदानवोददाशुषेदिवःकोशमचुच्यवुः ॥
विपर्जन्याःसृजंतिरोदसीअनुधन्वनायंतिवृष्टयः ॥ उदीरयथामरुतःस
मुद्रतोयूयंवृष्टिंवर्षयथापुरीषिणः ॥ नवोदस्राउपदस्यंतिधेनवःशुभंया
तामनुरथाअवृत्सत ॥ सृजावृष्टिंदिवआद्भिःसमुद्रंपृण ॥ अब्जाअसिप्र
थमजाबलमसिसमुद्रियं ॥ उन्नंभयपृथिवींभिंधीदंदिव्यंनभः ॥ उद्नोदि
व्यस्यनोदेहीशानोविसृजादृतिं ॥ येदेवादिविभागायेंतरिक्षभागायेपृथि
विभागाः ॥ तइमंयज्ञमवंतुतइदंक्षेत्रमाविशंतुतइदंक्षेत्रमनुविविशंतु
॥ ३ ॥ मारुतमसिमरुतामोजइतिकृष्णंवासःकृष्णतूषंपरिधत्तएतद्वैवृ
ष्ट्यैरूपंसरूपएवभूत्वापर्जन्यंवर्षयतिरमयतमरुतःश्येनमायिनमितिप

श्वाह्वातंप्रतिमीवातिपुरोवातमेवजनयतिवर्षस्यावरुध्यैवातनामानिजुहो
तिवायुर्वैवृष्ट्याईशेवायुमेवस्वेनभागधेयेनोपधावतिसएवास्मैपर्जन्यंवर्ष
यत्यष्टौजुहोतिचतस्रोवैदिशश्चतस्रोवांतरदिशादिग्भ्यएववृष्टिंसंप्र
च्यावयतिकृष्णाजिनेसंयौतिहविरेवाकरंतर्वेदिसंयौत्यवरुध्यैवयतीनामद्य
मानानांशीर्षाणिपरापतंतेखर्जूराअभवंतेषांरसऊर्ध्वोपतत्तानिकरी
राण्यभवन्त्सौम्यानिवैकरीराणिसौम्याखलुवाआहुतिर्दिवोवृष्टिंच्यावय
तियत्करीराणिभवंतिसौम्ययैवाहुत्यादिवोवृष्टिमवरुंधेमधुषासंयौत्यपां
वाएषओषधीनांरसोयन्मध्वद्भ्यएवौषधीभ्योवर्षत्यथोअद्भ्यएवौषधी
भ्योवृष्टिंनिनयतिमांदावाशाइतिसंयौतिनामधेयैरेवैनाअच्छैत्यथोयथाब्रू
यादसावेहीत्येवमेवैनानामधेयैराच्यावयतिवृष्णोअश्वस्यसंदानमसिवृ
ष्ट्यैत्वोपनह्यामीत्याहवृषावाअश्वोवृषापर्जन्यःकृष्णइवखलुवैभूत्वावर्ष

तिरूपेणैवैनँसमर्धयतिवर्षस्यावरुद्ध्यै ॥ ४ ॥ देवावसव्यादेवाःशर्मण्या
देवाःसपीतयइत्याबध्नातिदेवताभिरेवान्वहंवृष्टिमिच्छतियदिवर्षेत्तावत्ये
वहोतव्यंयदिनवर्षेच्छ्वोभूतेहविर्निर्वपेदहोरात्रेवैमित्रावरुणावहोरात्राभ्यां
खलुवैपर्जन्योवर्षतिनक्तंवाहिदिवावावर्षतिमित्रावरुणावेवस्वेनभागधे
येनोपधावतितावेवास्माअहोरात्राभ्यांपर्जन्यंवर्षयतोऽग्नयेधामच्छदेपुरो
डाशमष्टाकपालंनिर्वपेन्मारुतँसप्तकपालँसौर्यमेककपालमग्निर्वाइ
तोवृष्टिमुदीरयतिमरुतःसृष्टांनयन्तियदाखलुवाअसावादित्योन्यङ्रश्मि
भिःपर्यावर्ततेऽथवर्षतिधामच्छदिवखलुवैभूत्वावर्षत्येतावैदेवतावृष्ट्याई
शतेताएवस्वेनभागधेयेनोपधावतिताएवास्मैपर्जन्यंवर्षयन्त्युतावर्षिष्यन्
वर्षत्येवसृजावृष्टिंदिवआद्भिःसमुद्रंपृणेत्याहेमाश्चैवामूश्चापःसमर्धयत्य
थोआभिरेवामूरच्छैत्यब्जाअसिप्रथमजाबलमसिसमुद्रियमित्याहयथाय

जुरेवैतदुन्नंभयपृथिवीमितिवर्षाह्वांजुहोत्येषावाओषधीनांवृष्टिवनिस्त
यैववृष्टिमाच्यावयतियेदेवादिविभागाइतिकृष्णाजिनमवधूनोतीमएवा
सैलोकाःप्रीताअभीष्टाभवंति ॥ ५ ॥ उशंतस्त्वाहवामहउशंतःसमिधी
महि ॥ उशन्नुशतआवहपितॄन्हविषेअत्तवे ॥ त्वꣳसोमप्रचिकितोम
नीषात्वꣳरजिष्ठमनुनेषिपंथां ॥ तवप्रणीतीपितरोनइंदोदेवेषुरत्नमभजं
तधीराः ॥ त्वयाहिनःपितरःसोमपूर्वेकर्माणिचक्रुःपवमानधीराः ॥ वन्व
न्नवातःपरिधीꣳरपोर्णुवीरेभिरश्वैर्मघवाभवानः ॥ त्वꣳसोमपितृभिःसं
विदानोनुद्यावापृथिवीआततंथ ॥ तस्मैतइंदोहविषाविधेमवयꣳस्याम
पतयोरयीणां ॥ अग्निष्वात्ताःपितरएहगच्छतसदःसदःसदतसुप्रणीत
यः ॥ अत्ताहवीꣳषिप्रयतानिबर्हिष्यथारयिꣳसर्ववीरंदधातन ॥ बर्हि
षदःपितरऊत्यर्वागिमावोहव्याचकृमाजुषध्वं ॥ तआगतावसाशंतमेना

थास्मभ्यꣳशंयोररपोदधात ॥ आहंपितॄन्त्सुविदत्राꣳअवित्सिनपातंच
विक्रमणंचविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजंतपित्वस्तइहागमि
ष्ठाः ॥ उपहूताःपितरःसोम्यासोबर्हिष्येषुनिधिषुप्रियेषु ॥ तआगमंतु
तइहश्रुवंत्वधिब्रुवंतुतेऽवंत्वस्मान् ॥ उदीरतामवरउत्परासउन्मध्यमाः
पितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ इदं
पितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्ता
येवानूनꣳसुवृजनासुविक्षु ॥ अधायथानःपितरःपरासःप्रत्नासोअग्नऋ
तमाशुषाणाः ॥ शुचीदयंदीधितिमुक्थशासःक्षामाभिंदंतोअरुणीरप
व्रन् ॥ यदग्नेकव्यवाहनपितॄन्यक्ष्यृतावृधः ॥ प्रचहव्यानिवक्ष्यसिदेवेभ्य
श्चपितृभ्यआ ॥ त्वमग्नईडितोजातवेदोवाड्ढव्यानिसुरभीणिकृत्वा ॥
प्रादाःपितृभ्यःस्वधयातेअक्षन्नद्धित्वंदेवप्रयताहवीꣳषि ॥ मातलीक

ऽव्यैर्यमोअंगिरोभिर्बृहस्पतिर्ऋक्कभिर्वावृधानः ॥ यां॑श्चदेवावावृधुर्येच
देवान्त्स्वाहान्येस्वधयान्येमदंति ॥ इमंयमप्रस्तरमाहिसीदांगिरोभिः
पितृभिःसंविदानः ॥ आत्वामंत्राःकविशस्तावहंत्वेनाराजन्हविषामाद
यस्व ॥ अंगिरोभिरागहियज्ञियेभिर्यमवैरूपैरिहमादयस्व ॥ विवस्वंत॑
हुवेयःपितातेस्मिन्यज्ञेबर्हिष्यानिषद्य ॥ अंगिरसोनःपितरोनवग्वाअथ
र्वाणोभृगवःसोम्यासः ॥ तेषांवयं॑सुमतौयज्ञियानामपिभद्रेसौमनसे
स्याम ॥ ६ ॥ इतिद्वितीयाष्टकःसमाप्तः ॥
यस्तेद्रप्सस्कंदतियस्तेअं॑शुर्बाहुच्युतोधिषणयोरुपस्थात् ॥ अध्वर्योर्वा
परियस्तेपवित्रात्स्वाहाकृतमिंद्रायतंजुहोमि ॥ शिवस्त्वष्टरिहागहिविभुः
पोषउतत्मना ॥ यज्ञेयज्ञेनउदव ॥ भक्षेहिमाविशदीर्घायुत्वायशंतनुत्वा
यरायस्पोषायवर्चसेसुप्रजास्त्वायेहिवसोपुरोवसोप्रियोमेहृदोस्याश्विनो

स्त्वाबाहुभ्याꣳसध्यासंनृचक्षसंत्वादेवसोमसुचक्षाअवख्येषंमंद्राभिभू
तिःकेतुर्यज्ञानांवाग्जुषाणासोमस्यतृप्यतुमंद्रास्वर्वाच्यदितिरनाहतशी
र्ष्णीवाग्जुषाणासोमस्यतृप्यत्वेहिविश्वचर्षणेशंभूर्मयोभूस्वस्तिमाहरि
वर्णप्रचरक्रत्वेदक्षायरायस्पोषायसुवीरतायैमामाराजन्विबीभिषोमामे
हार्दिंत्विषावधीः ॥ वृषणेशुष्मायायुषेवर्चसे ॥ वसुमद्गणस्यसोमदेव
तेमतिविदःप्रातःसवनस्यगायत्रछंदसइंद्रपीतस्यनराशꣳसपीतस्यपितृ
पीतस्यमधुमतउपहूतस्योपहूतोभक्षयामिरुद्रवद्गणस्यसोमदेवतेमतिवि
दोमाध्यंदिनस्यसवनस्यत्रिष्टुप्छंदसइंद्रपीतस्यनराशꣳसपीतस्यपितृपी
तस्यमधुमतउपहूतस्योपहूतोभक्षयाम्यादित्यवद्गणस्यसोमदेवतेमतिवि
दस्तृतीयस्यसवनस्यजगतीछंदसइंद्रपीतस्यनराशꣳसपीतस्यपितृपीत
स्यमधुमतउपहूतस्योपहूतोभक्षयामि ॥ आप्यायस्वसमेतुतेविश्वतःसोम

वृषिणयं ॥ भवावाजस्यसंगथे ॥ हिन्वमेगात्राहरिवोगणान्मेमाविती
तृषः ॥ शिवोमेसप्तर्षीनुपतिष्ठस्वमामेवाङ्नाभिमातिंगाः ॥ अपामसो
मममृताअभूमादर्श्मज्योतिरविदामदेवान् ॥ किमस्मान्कृणवदरातिःकि
मुधूर्तिरमृतमर्त्यस्य ॥ यन्मआत्मनोमिंदाभूदग्निस्तत्पुनराहार्जातवेदावि
चर्षणिः ॥ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः ॥ पुनर्मेअश्विनायुवंच
क्षुराधत्तमक्ष्योः ॥ इष्टयजुषस्तेदेवसोमस्तुतस्तोमस्यशस्तोक्थस्यहरिव
तइंद्रपीतस्यमधुमतउपहूतस्योपहूतोभक्षयामि ॥ आपूर्यास्थामापूरयत
प्रजयाचधनेनच॥एतत्तेततयेचत्वामन्वेतत्तेपितामहप्रपितामहयेचत्वा
मन्वत्रपितरोयथाभागंमंदध्वंनमोवःपितरोरसायनमोवःपितरःशुष्मा
यनमोवःपितरोजीवायनमोवःपितरःस्वधायैनमोवःपितरोमन्यवेनमो
वःपितरोघोरायपितरोनमोवोयएतस्मिँल्लोकेस्थयुष्मांस्तेनुयेस्मिँल्लो

केमांतेनुयएतस्मिन्लोकेस्थयूयंतेषांवसिष्ठाभूयास्तयैस्मिन्लोकेहंतेषांव
सिष्ठोभूयासंप्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥ यत्का
मास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां ॥ देवकृतस्यैनसोवयज
नमसिमनुष्यकृतस्यैनसोवयजनमसिपितृकृतस्यैनसोवयजनमस्यप्सुधौ
तस्यसोमदेवतेनृभिःसुतस्येष्टयजुषस्तुतस्तोमस्यशस्तोक्थस्ययोभक्षोअ
श्वसनिर्योगोसनिस्तस्यतेपितृभिर्भक्षंकृतस्योपहूतस्योपहूतोभक्षयामि
॥१॥ महीनांपयोसिविश्वेषांदेवानांतनूरृध्यासमद्यपृषतीनांग्रहंपृषतीनां
ग्रहोसिविष्णोर्हृदयमस्येकमिषविष्णुस्त्वानुविचक्रमेभूतिर्दध्नाघृतेनव
र्धतांतस्यमेष्टस्यवीतस्यद्रविणमागम्याज्योतिरसिवैश्वानरंपृश्न्यैदुग्धं ॥
नयदेभ्योवृश्च्येतयद्वैश्वकर्मणानिजुहोतिसदस्यानेवतत्प्रीणात्यस्मेदेवासो
वपुषेचिकित्सतयमाशिरादंपतीवाममश्नुतः ॥ पुमान्पुत्रोजायतेविंदतेव

स्वथविश्वेअरपाएंधतेगृहः ॥ आशीर्दायादंपतीवाममश्नुतामरिष्टोरायः
सचताऽसमोकसा ॥ यआसिंचत्संदुग्धंकुंभ्यासहेष्टेनयामन्नमंतिंजहा
तुसः ॥ सर्पिर्ग्रीवीपीवर्यस्यजायापीवानःपुत्राअकृशासोअस्य ॥ सहजा
निर्यःसुमखस्यमानइंद्रायाशिरऽसहकुंभ्यादात् ॥ आशीर्मऊर्जमुतसुप्र
जास्त्वमिषंदधातुद्रविणऽसवर्चसं ॥ संजयन्क्षेत्राणिसहसाहमिंद्रकृण्वा
नोअन्याऽअधरान्सपत्नान् ॥ २ ॥ भवयजमानायशंयोः ॥ अग्निस्त्री
णित्रिधातून्याक्षेतिविदथाकविः ॥ सत्रीऽरेकादशाऽइह ॥ यक्षच्चपि
प्रयच्चनोविप्रोदूतःपरिष्कृतः ॥ नभंतामन्यकेसमे ॥ इंद्राविष्णूदृऽहि
ताःशंबरस्यनवपुरोनवतिंचश्नथिष्टं ॥ शतंवर्चिनःसहस्रंचसाकऽहथो
अप्रत्यसुरस्यवीरान् ॥ उतमातामहिषमन्ववेनदमीत्वाजहतिपुत्रदेवाः ॥
अथाब्रवीद्वृत्रमिंद्रोहनिष्यन्त्सखेविष्णोवितरंविक्रमस्व ॥ ३ ॥ अग्नेते

जस्विन्तेजस्वीत्वंदेवेषुभूयास्तेजस्वंतंमामायुष्मंतंवर्चस्वंतंमनुष्येषुकुरु
दीक्षायैचत्वातपसश्चतेजसेजुहोमितेजोविदसितेजोमामाहासीन्माहंते
जोहासिषंमामांतेजोहासीदिंद्रौजस्विन्नोजस्वीत्वंदेवेषुभूयाओजस्वंतंमा
मायुष्मंतंवर्चस्वंतंमनुष्येषुकुरुब्रह्मणश्चत्वाक्षत्रस्यचौजसेजुहोम्योजोवि
दस्योजोमामाहासीन्माहमोजोहासिषंमामामोजोहासीत्सूर्यभ्राजस्विन्
भ्राजस्वीत्वंदेवेषुभूयाभ्राजस्वंतंमामायुष्मंतंवर्चस्वंतंमनुष्येषुकुरुवायो
श्चत्वापांचभ्राजसेजुहोमिसुवर्विदसिसुवर्मामाहासीन्माहꣳसुवर्हासिषं
मामाꣳसुवर्हासीन्मयिमेधांमयिप्रजांमय्यग्निस्तेजोदधातुमयिमेधांमयि
प्रजांमयींद्रइंद्रियंदधातुमयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु ॥ ४ ॥
इंद्राग्नीमेवर्चःकृणुतांवर्चःसोमोबृहस्पतिः ॥ वर्चोमेविश्वेदेवावर्चोमेधत्त
मश्विना ॥ एतंयुवानंपरिवोददामितेनक्रीडंतीश्चरतप्रियेण ॥ मानः

शामजनुषांसुभागारायस्पोषेणसमिषामदेम ॥ नमोमहिम्नउतचक्षुषेते
मरुतांपितस्तदहंगृणामि ॥ अनुमन्यस्वसुयजायजामजुष्टंदेवानामिदम
स्तुहव्यं ॥ देवानामेषउपनाहआसीदपांगर्भओषधीषुन्यक्तः ॥ सोमस्यद्र
प्समवृणीतपूषाबृहन्नाद्रिरभवत्तदेषां ॥ पितावत्सानांपतिरघ्नियानामथो
पितामहतांगर्गराणां ॥ वत्सोजरायुप्रतिधुक्पीयूषआमिक्षामस्तुघृतम
स्यरेतः ॥ त्वांगावोवृणतराज्यायत्वांहवंतमरुतःस्वर्काः ॥ वर्ष्मन्क्षत्रस्य
ककुभिशिश्रियाणस्ततोनउग्रोविभजावसूनि ॥ व्यृध्देनवाएषपशुनाय
जतेयस्यैतानिनक्रियंतएषहत्वैसमृद्धेनयजतेयस्यैतानिक्रियंते ॥ ८ ॥
महीद्यौःपृथिवीचनइमंयज्ञंमिमिक्षतां ॥ पिपृतान्नोभरीमभिः ॥ धाता
ददातुनोरयिमीशानोजगतस्पतिः ॥ सनःपूर्णेनवावनत् ॥ धाताप्रजा
याउतरायईशेधातेदंविश्वंभुवनंजजान ॥ धातापुत्रंयजमानायदातात

स्माउहव्यंघृतवद्विधेम ॥ धातादददातुनोरयिंप्राचींजीवातुमक्षितां ॥
वयंदेवस्यधीमहिसुमतिꣳसत्यराधसः ॥ धातादददातुदाशुषेवसूनिप्रजा
कामायमीढुषेदुरोणे ॥ तस्मैदेवाअमृताःसंव्ययन्तांविश्वेदेवासोअदितिः
सजोषाः ॥ अनुमन्यतामनुमन्यमानाप्रजावन्तꣳरयिमक्षीयमाणं ॥ तस्यै
वयꣳहेडसिमापिभूमसानोदेवीसुहवाशर्मयच्छतु ॥ यस्यामिदंप्रदिशि
यद्विरोचतेनुमतिंप्रतिभूषन्त्यायवः ॥ यस्याउपस्थउर्वन्तरिक्षꣳसानोदेवी
सुहवाशर्मयच्छतु ॥ राकामहꣳसुहवाꣳसुष्टुतीहुवेशृणोतुनःसुभगाबो
धतुत्मना ॥ सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरꣳशतदायमुक्थ्यं ॥
यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि ॥ ताभिर्नोअद्यसु
मनाउपागहिसहस्रपोषꣳसुभगेरराणा ॥ कुहूमहꣳसुभगांविद्मनापसम
स्मिन्यज्ञेसुहवांजोहवीमि ॥ सानोददातुश्रवणंपितॄणांतस्यास्तेदेविहवि

षांविधेम॥कुहूर्देवानाममृतस्यपत्नीहव्यानोअस्यहविषश्चिकेतु ॥ संदाशु
षेकिरतुभूरिवाम९रायस्पोषंचिकितुषेदधातु ॥६॥ तंतुंतन्वन्रजसोभानु
मन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् ॥ अनुल्बणंवयतजोगुवामपोम
नुर्भवजनयादैव्यंजनं ॥ चित्तंचचित्तिश्चाकूतंचाकूतिश्च विज्ञातंचविज्ञा
नंचमनश्चशक्वरीश्चदर्शश्चपूर्णमासश्चबृहच्चरथंतरंचप्रजापतिर्जयानिं
द्रायवृष्णेप्रायच्छदुग्रःपृतनाज्येषुतस्मैविशःसमनमंतसर्वाःसउग्रःसहिह
व्योबभूव ॥ अग्निर्भूतानामाधिपतिःसमावत्विंद्रोज्येष्ठानांयमःपृथिव्या
वायुरंतरिक्षस्यसूर्योदिवश्चंद्रमानक्षत्राणांबृहस्पतिर्ब्रह्मणोमित्रःसत्यानां
वरुणोपा९समुद्रःस्रोत्यानामन्न९साम्राज्यानामाधिपतितन्मावतुसोमओ
षधीना९सविताप्रसवाना९रुद्रःपशूनांत्वष्टारूपाणांविष्णुःपर्वतानांमरु
तोगणानामाधिपतयस्तेमावंतुपितरःपितामहाःपरेवरेततास्ततामहाइह

मोवत ॥ अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्म
न्नस्यांदेवहूत्यां॥वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभवानः॥
यत्त्वेमहेप्रतितन्नोजुषस्वशन्नएधिद्विपदेशंचतुष्पदे ॥ वास्तोष्पतेशग्म
यासꣳसदातेसक्षीमहिरण्वयागातुमत्या ॥ आवःक्षेमउतयोगेवरंनोयूयं
पातस्वस्तिभिःसदानः ॥ यत्तेअग्नेतेजस्तेनाहंतेजस्वीभूयासंयत्तेअग्नेव
र्चस्तेनाहंवर्चस्वीभूयासंयत्तेअग्नेहरस्तेनाहꣳहरस्वीभूयासं ॥ अभित्वा
देवसवितरीशानंवार्याणां ॥ सदावन्भागमीमहे ॥ त्वामग्नेपुष्करादध्य
थर्वानिरमंथत ॥ मूर्ध्नोविश्वस्यवाघतः ॥ अयमग्निःसहस्त्रिणोवाजस्यश
तिनस्पतिः ॥ मूर्धाकवीरयीणां ॥ ७ ॥ इतितृतीयाष्टकःसमाप्तः ॥
युंजानःप्रथमंमनस्तत्त्वायसविताधियः ॥ अग्निंज्योतिर्निचाय्यपृथिव्या
अध्याभरत ॥ युक्त्वायमनसादेवान्सुवर्यतोधियादिवं ॥ बृहज्ज्योतिःक

रिष्यतःसवितापसुवातितान् ॥ युक्तेनमनसावयंदेवस्यसवितुःसवे ॥ सु
वर्गेयायशक्त्यै ॥ युंजतेमनउतयुंजतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥
विहोत्रादधेवयुनाविदेकइन्महीदेवस्यसवितुःपरिष्टुतिः ॥ युजेवांब्रह्मपू
र्व्यंनमोभिर्विश्लोकायंतिपथ्येवसूराः ॥ शृण्वंतिविश्वेअमृतस्यपुत्राआये
धामानिदिव्यानितस्थुः ॥ यस्यप्रयाणमन्वन्यइद्ययुर्देवादेवस्यमहिमान
मर्चतः ॥ यःपार्थिवानिविममेसएतशोरजांसिदेवःसवितामहित्वना ॥
देवसवितःप्रसुवयज्ञंप्रसुवयज्ञपतिंभगायदिव्योगंधर्वः ॥ केतपूःकेतन्नः
पुनातुवाचस्पतिर्वाचंनःस्वदातिनः ॥ इमन्नोदेवसवितर्यज्ञंप्रसुवदेवा
युवंसखिविदंसत्राजितंधनाजितंस्वर्जितं ॥ ऋचास्तोमंसमर्धय
गायत्रेणरथंतरं ॥ बृहद्गायत्रवर्तनि ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बा
हुभ्यांपूष्णोहस्ताभ्यांगायत्रेणछंदसाददेंगिरस्वदभ्रिरसिनारिरसिपृथि

ण्याःसधस्थादग्निंपुरीष्यमंगिरस्वदाभरत्रैष्टुभेनत्वाछंदसाददेंगिरस्वत्व
भ्रिरसिनारिरसित्वयावयꣳसधस्थआग्निꣳशंकेमखनितुंपुरीष्यंजागतेन
त्वाछंदसाददेंगिरस्वद्धस्तआधायसविताविभ्रदभ्रिꣳहिरण्ययीं ॥ तया
ज्योतिरजस्त्रमिदग्निंखात्वीनआभरानुष्टुभेनत्वाछंदसाददेंगिरस्वत् ॥१॥
योगेयोगेतवस्तरंवाजेवाजेहवामहे ॥ सखायइंद्रमूतये ॥ ओषधयःप्रति
मोदध्वमेनंपुष्पावतीःसुपिप्पलाः ॥ अयंवोगर्भऋत्वियःप्रत्नꣳसधस्थ
मासंदत् ॥ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदा
धारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥ यःप्राणतोनिमिषतोमहि
त्वैकइद्राजाजगतोबभूव ॥ यईशेअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषा
विधेम ॥ यआत्मदाबलदायस्यविश्वउपासतेप्रशिषंयस्यदेवाः ॥ यस्य
छायामृतंयस्यमृत्युःकस्मैदेवायहविषाविधेम ॥ यस्येमेहिमवंतोमहित्वा

यस्यंसमुद्रꣳरसयासहाहुः ॥ यस्येमाःप्रदिशोयस्यबाहूकस्मैदेवायहविषा
विधेम ॥ यंक्रंदसीअवसातस्तभानेअभ्यैक्षेतांमनसारेजमाने ॥ यत्रा
धिसूरउदितौꣳव्येतिकस्मैदेवायहविषाविधेम ॥ येनद्यौरुग्रापृथिवीचदृढे
येनसुवस्तभितंयेननाकः ॥ योअंतरिक्षेरजसोविमानःकस्मैदेवायहविषा
विधेम ॥ आपोहयन्महतीर्विश्वमायंदक्षंदधानाजनयंतीरग्निं ॥ ततोदेवा
नांनिरवर्ततासुरेकःकस्मैदेवायहविषाविधेम ॥ यश्चिदापोमहिनापर्यप
श्यद्दक्षंदधानाजनयंतीरग्निं ॥ योदेवेष्वधिदेवएकआसीत्कस्मैदेवायह
विषाविधेम ॥ पावीरवीकन्याचित्रायुःसरस्वतीवीरपत्नीधियंधात् ॥
ग्नाभिरच्छिद्रꣳशरणꣳसजोषादुराधर्षंगृणतेशर्मयꣳसत् ॥ २ ॥ अग्ने
भ्यावर्तिन्नभिनआवर्तस्वायुषावर्चसासन्यामेधयाप्रजयाधनेन ॥ अग्ने
अंगिरःशतंतेसंत्वावृतःसहस्रंतउपावृतः ॥ तासांपोषस्यपोषेणपुनर्नो

नष्टमाकृधिपुनर्नोरयिमाकृधि ॥ पुनस्त्वादित्यारुद्रावसवःसमिंधतांपुन
र्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वंतनुवोवर्धयस्वसत्याःसंतुयजमानस्य
कामाः ॥ अपेतवीतविचसर्पतातोयेत्रस्थपुराणायेचनूतनाः ॥ अदा
दिदंयमोवसानंपृथिव्याअक्रन्निमंपितरोलोकमस्मै ॥ इडामग्नेपुरुदंऽ
सꣳसनिंगोःशश्वत्तमꣳहवमानायसाध ॥ स्यान्नःसूनुस्तनयोविजावाग्ने
सातेसुमतिर्भूत्वस्मे ॥ अयंतेयोनिर्ऋत्वियोयतोजातोअरोचथाः ॥ तंजा
नन्नग्नआरोहाथानोवर्धयारयिं ॥ असुन्वंतमयजमानमिच्छस्तेनस्येत्यांत
स्करस्यान्वेषि ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥
देवीमहंनिर्ऋतिंवंदमानःपितेवपुत्रंदंसयेवचोभिः ॥ विश्वस्ययाजायमान
स्यवेदशिरःशिरःप्रतिसूरीविचष्टे ॥ संतेपयाꣳसिसमुयंतुवाजाःसंवृष्ण्या
न्यभिमातिषाहः ॥ आप्यायमानोअमृतायसोमदिविश्रवाꣳस्युत्तमा

निधिष्व ॥ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबु
ध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ द्रप्सश्चस्कंदपृथि
वीमनुद्यामिमंचयोनिमनुयश्चपूर्वः ॥ तृतीयंयोनिमनुसंचरंतंद्रप्संजुहो
म्यनुसप्तहोत्राः ॥ मरुतोयस्यहिक्षयेपाथादिवोविमहसः ॥ ससुगोपात
मोजनः ॥ ३ ॥ इयमेवसायाप्रथमाव्यौच्छदंतरस्यांचरतिप्रविष्टा ॥
वधूर्जजाननवगज्जनित्रीत्रयएनांमहिमानःसचंते ॥ छंदस्वतीउषसापेपि
शानेसमानंयोनिमनुसंचरंती ॥ सूर्यपत्नीविचरतःप्रजानतीकेतुंकृण्वाने
अजरेभूरिरेतसा ॥ ऋतस्यपंथामनुतिस्रआगुस्त्रयोघर्मासोअनुज्योति
षागुः ॥ प्रजामेकारक्षत्यूर्जमेकाव्रतमेकारक्षतिदेवयूनां ॥ अग्निमीडे
पुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमं ॥ अबोध्यग्निःसमिधा
जनानांप्रतिधेनुमिवायतीमुषासं ॥ यह्वाइवप्रवयामुज्जिहानाःप्रभानवः

सिस्त्रतेनाकमच्छ ॥ ४ ॥ प्रजापतिर्मनसांधोच्छैतोधातादीक्षायाꣳस
विताभृत्यांपूषासोमक्रयण्यांवरुणउपनद्धोसुरःक्रीयमाणोमित्रःक्रीतःशि
पिविष्टआसादितोनरंधिषःप्रोह्यमाणोधिपतिरागतःप्रजापतिःप्रणीय
मानोग्निराग्नींध्रेबृहस्पतिराग्नींध्रात्प्रणीयमानइंद्रोहविर्धानेदितिरासादि
तोविष्णुरुपावह्रियमाणोथर्वोपोत्तोयमोभिषुतोपूतपाआधूयमानोवायुः
पूयमानोमित्रःक्षीरश्रीर्मंथीसक्तुश्रीर्वैश्वदेवउन्नीतोरुद्रआहुतोवायुरावृत्तो
नृचक्षाःप्रतिख्यातोभक्षआगतःपितृणांनाराशꣳसोसुरात्तःसिंधुरवभृथ
मवप्रयन्त्समुद्रोवगतःसलिलःप्रप्लुतःसुवरुदृचंगतः॥५॥ बृहत्सामक्षत्र
भृद्वृद्धवृष्णियंत्रिष्टुभौजःशुभितमुग्रवीरं ॥ इंद्रस्तोमेनपंचदशेनमध्यमि
दंवातेनसगरेणरक्ष॥ अश्मन्नूर्जंपर्वतेशिश्रियाणांवातेपर्जन्येवरुणस्यशु
ष्मे ॥ अद्भ्यओषधीभ्योवनस्पतिभ्योधिसंभृतांतांनइषमूर्जंधत्तमरुतःस

ँरराणाः ॥ अश्मँस्तेक्षुदमुंतेशुगृच्छतुयंद्विष्मः ॥ समुद्रस्यत्वावाक
याग्नेपरिव्ययामसि ॥ पावकोअस्मभ्यँशिवोभव ॥ हिमस्यत्वाजरायुणा
ग्नेपरिव्ययामसि ॥ पावकोअस्मभ्यँशिवोभव ॥ उपज्मन्नुपवेतसेवत्तरं
नदीष्वा ॥ अग्नेपित्तमपामसि ॥ मंडूकिताभिरागहिसेमन्नोयज्ञं ॥ पाव
कवर्णँशिवंकृधि ॥ पावकआचितयंत्याकृपा ॥ क्षामन्रुरुचउषसोन
भानुना ॥ तूर्वन्नयामन्नेतशस्यनूरणआयोघृणे ॥ नततृषाणोअजरः ॥
अग्नेपावकरोचिषामंद्रयादेवजिह्वया ॥ आदेवान्वक्षियक्षिच ॥ सनः
पावकदीदिवोग्नेदेवाँइहावह ॥ उपयज्ञँहविश्चनः ॥ अपामिदंन्ययं
नँसमुद्रस्यनिवेशनं ॥ अन्यंतेअस्मत्तपंतुहेतयःपावकोअस्म ँशिवोभ
व ॥ नमस्तेहरसेशोचिषेनमस्तेअस्त्वर्चिषे ॥ अन्यंतेअस्मत्तपंतुहेतयः
पावकोअस्मभ्यँशिवोभव ॥ नृषदेवट्अप्सुषदेवड्वनसदेवट्बर्हिषदेवट्

सुवर्विदेवद्द ॥ येदेवादेवानांयज्ञियायज्ञियानाꣳसंवत्सरीणमुपभागमास
ते। अहुतादोहविषोयज्ञेअस्मिन्त्स्वयंजुहुध्वंमधुनोघृतस्य ॥ येदेवादेवेष्व
धिदेवत्वमायन्येब्रह्मणःपुरएतारोअस्य ॥ येभ्योनर्तेपवतेधामकिंचननते
दिवोनपृथिव्याअधिस्नुषु ॥ प्राणदाअपानदाव्यानदाश्चक्षुर्दावर्चोदाव
रिवोदाः ॥ अन्यंतेअस्मत्तपंतुहेतयःपावकोअस्मभ्यꣳशिवोभव ॥ अग्नि
स्तिग्मेनशोचिषायꣳसद्विश्वंन्यत्रिणं ॥ अग्निर्नौवꣳसतेरयिं ॥ सैना
नीकेनसुविदत्रोअस्मेयष्टादेवाꣳआयजिष्ठस्वस्ति ॥ अदब्धोगोपाउतनः
परस्पाअग्नेद्युमदुतरेवद्दिदीहि ॥ ६ ॥ मनोयुजंवाजेअद्याहुवेम ॥ सनो
नेदिष्ठाहवनानिजोषतेविश्वशंभूरवसेसाधुकर्मा ॥ विश्वकर्मन्हविषावा
वृधानःस्वयंयजस्वतनुवंजुषाणः ॥ मुह्यंत्वन्येअभितःसपत्नाइहास्माकं
मघवासूरिरस्तु ॥ विश्वकर्मन्हविषावर्धनेनत्रातारमिंद्रमकृणोरवध्यं ॥

तस्मैविशःसमनमंतपूर्वीरयमुग्रोविहव्योयथासत् ॥ समुद्रायवयुनायसिं
धूनांपतयेनमः ॥ नदीनांसर्वासांपित्रेजुहुताविश्वकर्मणेविश्वाहाम
र्त्यंहविः ॥ इंद्रंविश्वाअवीवृधन्समुद्रव्यचसंगिरः ॥ रथीतमंरथी
नांवाजानांसत्पतिंपतिं ॥ आजुह्वानःसुप्रतीकःपुरस्तादग्नेस्वांयोनि
मासीदसाध्या ॥ अस्मिन्त्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसी
दत ॥ आमावाजस्यप्रसवोजगम्यादाद्यावापृथिवीविश्वशंभू ॥ आमा
गंतांपितरामातराचामासोमोअमृतत्वायगम्यात् ॥ स्वादुषंसदःपित
रोवयोधाःकृच्छ्रेश्रितःशक्तीवंतोगभीराः ॥ चित्रसेनाइषुबलाअमृध्राःस
तोवीराउरवोव्रातसाहाः ॥ ब्राह्मणासःपितरःसोम्यासःशिवेनोद्यावापृ
थिवीअनेहसा ॥ पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोअघशंसईं
शत ॥ अहिरिवभोगैःपर्यैतिबाहुंज्यायाहेतिंपरिबाधमानः ॥ हस्तघ्नो

विश्वावयुनानिविद्वान्पुमान्पुमांसंपरिपातुविश्वतः ॥ उपश्वासयपृ
थिवीमुतद्यांपुरुत्रातेमनुतांविष्ठितंजगत् ॥ सदुंदुभेसजूरिंद्रेणदेवैर्दूरा
द्दवीयोअपसेधशत्रून् ॥ आमूरजप्रत्यावर्तयेमाःकेतुमद्दुंदुभिर्वावदीति ॥
समश्वपर्णाश्चरंतिनोनरोस्माकमिंद्ररथिनोजयंतु ॥ यदक्रंदःप्रथमंजाय
मानउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यं
महिजातंतेअर्वन् ॥ यत्तेगात्रादग्निनापच्यमानादभिशूलंनिहतस्यावधा
वंति ॥ मातद्भूम्यामाश्रिषन्मातृणेषुदेवेभ्यस्तदुशद्भ्योरातमस्तु ॥ वाजे
वाजेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्यमध्वःपिबतमाद
यध्वंतृप्तायातपथिभिर्देवयानैः ॥ पयःपृथिव्यांपयओषधीषुपयोदिव्यं
तरिक्षेपयोधाः॥ पयस्वतीःप्रदिशःसंतुमह्यं॥७॥ इतिचतुर्थाष्टकसमाप्तः॥
अवंरुंधेमुंजानवंदधात्यूर्ग्वैमुंजाऊर्जमेवास्माआपिंदधात्यग्निर्देवेभ्योनि

लांयतसक्रुंमुकंप्राविशत्क्रुंमुकमवदधातियद्देवास्यतत्रन्यंक्तंतद्देवावरुंध
आज्येनसंयौत्येतद्वाअग्नेःप्रियंधामयदाज्यंप्रियेणैवैनंधाम्नासमर्धयत्यथो
तेजसावैकंकतीमादधातिभाएवावरुंधेशमीमयीमादधातिशांत्यैसीदत्वं
मातुरस्याउपस्थइतीतितिसृभिर्जातमुपतिष्ठतेत्रयइमेलोकाएष्वेवलोकेष्वा
विदंगच्छत्यथोप्राणानेवात्मन्धत्ते॥१॥प्रजापतेरक्ष्यश्वयत्तत्परापतत्तद
श्वोभवद्यदश्वयत्तदश्वस्याश्वत्वंतद्देवाअश्वमेधेनैवप्रत्यदधुरेषवैप्रजापति
ꣳसर्वंकरोतियोश्वमेधेनयजतेसर्वएवभवतिसर्वस्यवाएषाप्रायश्चित्तिःस
र्वस्यभेषजꣳसर्वंवाएतेनपाप्मानंदेवाअतरन्नपिवाएतेनब्रह्महत्यामंतर
न्त्सर्वंपाप्मानंतरतितरतिब्रह्महत्यांयोश्वमेधेनयजतेयउचैनमेवंवेदोत्तरं
वैतत्प्रजापतेरक्ष्यश्वयत्तस्मादश्वस्योत्तरतोवद्यंतिदक्षिणतोन्येषांपशूनांवै
तसःकटोभवत्यप्सुयोनिर्वाअश्वोप्सुजोवेतसःस्वएवैनंयोनौप्रतिष्ठापय

तिचतुष्टोमस्तोमोभवतिसरड्ढवाअश्वस्यसक्थ्यावृहत्तद्देवाश्चतुष्टोमेनैव
प्रत्यदधुर्यच्चतुष्टोमस्तोमोभवत्यश्वस्यसर्वत्वाय ॥ २ ॥ वसोर्धारांजुहोति
वसोर्मेधारासदितिवाएषाहूयतेघृतस्यवाएनमेषाधारामुष्मिंल्लोकेपिन्व
मानोपतिष्ठतआज्येनजुहोतितेजोवाआज्यंतेजोवसोर्धारातेजसैवास्मैते
जोवरुंधेथोकामावैवसोर्धाराकामानेवावरुंधेयंकामयेतप्राणानस्यान्नाद्यं
विच्छिंद्यामितिविग्राहंतस्यजुहुयात्प्राणानेवास्यान्नाद्यंविच्छिनत्तियंकाम
येतप्राणानस्यान्नाद्यꣳसंतनुयामितिसंततांतस्यजुहुयात्प्राणानेवास्यान्ना
द्यꣳसंतनोतिद्वादशद्वादशानिजुहोतिद्वादशमासाःसंवत्सरःसंवत्सरेणै
वास्माअन्नमवरुंधेन्नंचमेक्षुच्चमइत्याहैतद्वाअन्नस्यरूपꣳरूपेणैवान्नमवरुं
धेग्निश्चमआपश्चमइत्याहैषावाअन्नस्ययोनिःसयोन्येवान्नमवरुंधेऐंद्राणि
जुहोतिदेवताएवावरुंधेयत्सवैषामर्धमिंद्रःप्रतितस्मादिंद्रोदेवतानांभूयि

चंमे ॥ सर्वाँऽअग्नीँऽरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ यद्दः
संप्रयतीरहावनंदताहते ॥ तस्मादानद्योनामस्थतावोनामानिसिंधवः ॥
यत्प्रेषितावरुणेनताःशीभगंऽसमवल्गत ॥ तदाप्नोदिंद्रोवोयतीस्तस्मा
दापोअनुस्थन ॥ अपकामंऽस्यंदमानाअवीवरतवोहिकं ॥ इंद्रोवःशक्ति
भिर्देवीस्तस्माद्वार्णामवोहितं ॥ एकोदेवोअप्यतिष्ठत्स्यंदमानायथावशं ॥
उदानिषुर्महीरितितस्मादुदकमुच्यते ॥ आपोभद्राघृतमिदापआसुरग्नी
षोमौबिभ्रत्यापइत्ताः ॥ तीव्रोरसोमधुपृचामरंगमआमाप्राणेनसहवर्च
सागन् ॥ आदित्पश्याम्युतवाश्रृणोम्यामाघोषोगच्छतिवाङ्नआसां ॥
मन्येभेजानोअमृतस्यतर्हिहिरण्यवर्णाअतृपंयदावः ॥ आपोहिष्ठामयो
भुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्य
भाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयाय

जिन्वथ ॥ आपोजनयथाचनः ॥ दिविश्रयस्वांतरिक्षेयतस्वपृथिव्या
संभवब्रह्मवर्चसमसिब्रह्मवर्चसायत्वा ॥ मयिगृह्णाम्यग्रेअग्निँरायस्पो
षायसुप्रजास्त्वायसुवीर्याय ॥ मयिप्रजांमयिवर्चोदधाम्यरिष्टास्यामतनु
वासुवीराः ॥ योनोअग्निःपितरोहृत्स्वंतरमर्त्योमर्त्याँआविवेश ॥ तमा
त्मन्परिगृह्णीमहेवयंमासोअस्माँअवहायपरागात् ॥ ५ ॥ इतिपंचमा
ष्टकसमाप्तः ॥

नेष्टःपत्नीमुदानयेत्याहाग्नीद्देवनेष्टरिरेतोदधातिनेष्टापत्नियामुद्गात्रासं
ख्यापयतिप्रजापतिर्वाएषयदुद्गाताप्रजानांप्रजननायापउपप्रवर्तयतिरे
तएवतत्सिंचत्यूरुणोपप्रवर्तयत्यूरुणाहिरेतःसिच्यतेनग्नंकृत्योरुमुपप्रव
र्तयतियदाहिनग्नऊरुर्भवत्यथमिथुनीभवतोथरेतःसिच्यतेथप्रजाःप्रजा

यंते ॥ यन्मेमनःपरागतंयद्वामेअपरागतं ॥ राज्ञासोमेनतद्वयमस्मासु धारयामसि ॥ १ ॥ इतिषष्ठाष्टकःसमाप्तः ॥

आजिंघ्रकलशंमह्युरुधाराप‌यस्वत्यात्वाविशंत्विंदवःसमुद्रमिवसिंधवः सामासहस्रआभजप्रजयापशुभिःसहपुनर्माविशताद्रयिः ॥ लोकःसरस्वत्यायांत्येषवैदेवयानःपंथास्तमेवान्वारोहंत्याक्रोशंतोयांत्यवर्तिमेवान्यस्मिन्प्रतिषज्यप्रतिष्ठांगच्छंतियदादशशतंकुर्वंत्यथैकमुत्थानंशतायुःपुरुषःशतेंद्रियआयुष्येवेंद्रियेप्रतितिष्ठंतियदाशतंसहस्रंकुर्वंत्यथैकमुत्थानंसहस्रसंमितोवाअसौलोकोमुमेवलोकमभिजयंतियदेषांप्रमीयेतयद्वाजीयेरन्नथैकमुत्थानंतद्धितीर्थं ॥ १ ॥ मयोभूर्वातोअभिवातूस्रा ऊर्जस्वतीरोषधीरारिशंतां ॥ पीवस्वतीर्जीवधन्याःपिबंत्ववसायपद्वते रुद्रमृड ॥ याःसरूपाविरूपाएकरूपायासामग्निरिष्ट्यानामानिवेद ॥

याअंगिरसस्तपसेहचक्रुस्ताभ्यःपर्जन्यमहिशर्मयच्छ ॥ यादेवेषुतनुवमै
रयंतयासाꣳसोमोविश्वारूपाणिवेद ॥ ताअस्मभ्यंपयसापिन्वमानाःप्र
जावतीरिंद्रगोष्ठेरिरीहि ॥ प्रजापतिर्मह्यमेताररराणोविश्वैर्देवैःपितृभिः
संविदानः ॥ शिवाःसतीरुपनोगोष्ठमाकस्तासांवयंप्रजयासꣳसदेम ॥
इहधृतिःस्वाहेहविधृतिःस्वाहेहरंतिःस्वाहेहरमतिःस्वाहामहीमूषुसुत्रामा
णं ॥ २ ॥ किꣳस्विदासीत्पूर्वचित्तिःकिꣳस्विदासीत्बृहद्वयः ॥ किꣳ
स्विदासीत्पिशंगिलाकिꣳस्विदासीत्पिलिप्पिला ॥ द्यौरासीत्पूर्वचि
त्तिरश्वआसीत्बृहद्वयः ॥ रात्रिरासीत्पिशंगिलाविरासीत्पिलिप्पिला ॥
कःस्विदेकाकीचरतिकउस्विज्जायतेपुनः ॥ किꣳस्विद्धिमस्यभेषजंकिꣳ
स्विदावपनंमहत् ॥ सूर्यएकाकीचरतिचंद्रमाजायतेपुनः ॥ अग्निर्हिम
स्यभेषजंभूमिरावपनंमहत् ॥ पृच्छामित्वापरमंतंपृथिव्याःपृच्छामित्वा

भुवनस्यनाभिं ॥ पृच्छामित्वावृष्णोअश्वस्यरेतः पृच्छामिवाचःपरमंव्यो
म ॥ वेदिमाहुःपरमंतंपृथिव्यायज्ञमाहुर्भुवनस्यनाभिं ॥ सोममाहुर्वृ
ष्णोअश्वस्यरेतोब्रह्मैववाचःपरमंव्योम ॥ ३ ॥ आब्रह्मन्ब्राह्मणोब्रह्म
वर्चसीजायतामास्मिन्राष्ट्रेराजन्यइषव्यःशूरोमहारथोजायतांदोग्ध्रीधे
नुर्वोढानड्वानाशुःसप्तिःपुरंधिर्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमान
वीरोजायतांनिकामेनिकामेनःपर्जन्योवर्षतुफलिन्योनओषधयःपच्यंतां
योगक्षेमोनःकल्पतां ॥ नमोग्नयेपृथिविक्षितेलोकस्पृतेलोकमस्मैयजमा
नायदेहिनमोवायवेंतरिक्षक्षितेलोकस्पृतेलोकमस्मैयजमानायदेहिनमः
सूर्यायदिविक्षितेलोकस्पृतेलोकमस्मैयजमानायदेहि ॥ ४ ॥ इतिमंत्र
संहितासप्तमाष्टकःसमाप्तः ॥
नमःककुभायनिषंगिणेस्तेनानांपतयेनमः ॥ नमोनिषंगिणइषुधिमते

तस्कराणांपतयेनमः ॥ नमोनिषंगिणेचेषुधिमतेच ॥ येतीर्थानिप्रच
रंतिसृकावंतोनिषंगिणः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥
सइषुहस्तैःसनिषंगिभिर्वशीसꣳस्रष्टासयुधइंद्रोगणेन ॥ सꣳसृष्टजि
त्सोमपाबाहुशर्ध्यूर्ध्वधन्वाप्रतिहिताभिरस्ता ॥ १ ॥ समिद्धस्यश्रयमा
णःपुरस्ताद्ब्रह्मवन्वानोअजरꣳसुवीरं ॥ आरेअस्मदमतिंबाधमानउच्छ्रय
स्वमहतेसौभगाय ॥ वनस्पतेशतवल्शोविरोहसहस्रवल्शाविवयꣳरु
हेम ॥ यंत्वायꣳस्वधितिस्तेतिजानःप्रणिनायमहतेसौभगाय ॥ संदि
व्येनदीदिहिरोचनेनविश्वाआभाहिप्रदिशःपृथिव्याः ॥ संचेध्यस्वाग्ने
प्रचबोधयैनमुच्चतिष्ठमहतेसौभगाय ॥ बृहस्पतेसवितर्बोधयैनꣳसꣳ
शितंचित्संतराꣳसꣳशिशाधि ॥ वर्धयैनंमहतेसौभगाय ॥ चतुःशि
खंडायुवतिःसुपेशाघृतप्रतीकाभुवनस्यमध्ये ॥ मर्मृज्यमानामहतेसौभ

गाय ॥ नर्यंप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमा
णांच ॥ अमृतेसत्येप्रतिष्ठितां ॥ अथब्राह्मणप्रारंभः ॥ ॐउद्धन्यमा
नमस्याअमेध्यं ॥ अपपाप्मानंयजमानस्यहंतु ॥ शिवानःसंतुप्रदिशः
श्वतंस्त्रः ॥ शन्नोमातापृथिवीतोकसाता ॥ वैश्वानरस्यरूपं ॥ पृथिव्यां
परिस्त्रसा ॥ स्योनमाविशंतुनः ॥ अग्नेरेतश्चंद्रँहिरण्यं ॥ अद्भ्यःसंभू
तममृतंप्रजासु॥ तत्संभरन्नुत्तरतोनिधाय ॥ अतिप्रयच्छंदुरितिंतिरेयं ॥
नर्यंप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥
अमृतेसत्येप्रतिष्ठितां ॥ अथर्वपितुंमेगोपाय ॥ रसमन्नमिहायुषे ॥ अद
ऽध्यायोशीततनो ॥ अविषन्नःपितुंकृणु ॥ शँस्यंपशून्मेगोपाय ॥ द्वि
पादोयेचतुष्पदः ॥ अष्टाशफाश्चयइहाग्ने ॥ येचैकशफाआशुगाः ॥
सप्रथसभांमेगोपाय ॥ येचसभ्याःसभासदः ॥ तानिंद्रियावतःकुरु ॥

सर्वमायुरुपासतां ॥ अहेर्बुध्नियमंत्रंमेगोपाय ॥ यमृषयस्त्रयिविदा
विदुः ॥ ऋचःसामानियजूꣳषि ॥ साहिःश्रीरमृतासतां ॥ चतुःशिखं
डायुवतिःसुपेशाः ॥ घृतप्रतीकाभुवनस्यमध्ये ॥ मर्मृज्यमानामहतेसौ
भगाय ॥ महांधुक्षवयजमानायकामान् ॥ इहैवसंतत्रसतोवोअग्नयः ॥
प्राणेनवाचामनसाबिभर्मि ॥ तिरोमासंतमायुर्माप्रहासीत् ॥ ज्योतिषा
वोवैश्वानरेणोपतिष्ठे ॥ पंचधाग्नीन्व्यक्रामत् ॥ विराट्सृष्टाप्रजापतेः ॥
ऊर्ध्वारोहद्रोहिणी ॥ योनिरग्नेःप्रतिष्ठितिः ॥ १ ॥ संततिर्वाएतेग्रहाः ॥
यत्परःसामानः ॥ विषूवांदिवाकीर्त्यं ॥ यथाशालायैपक्षसी ॥ एवꣳसंव
त्सरस्यपक्षसी ॥ यदेतेनगृह्येरन् ॥ विषूचीसंवत्सरस्यपक्षसीव्यवस्रꣳसे
यातां ॥ आर्तिमार्छेयुः ॥ यदेतेगृह्यंते ॥ यथाशालायैपक्षसीमध्यमंवꣳश
मभिसमायच्छति ॥ एवꣳसंवत्सरस्यपक्षसीदिवाकीर्त्यमभिसंतन्वंति ॥

नातिमाछेंति ॥ एकविंशमहर्भवति ॥ शुक्राग्राग्रहागृह्यंते ॥ प्रत्युत्त
ब्ध्यैसयत्वाय ॥ सौर्यएतदहःप्रत्युरालभ्यते ॥ सौर्यातिग्राह्योगृह्यते ॥
अहरेवरूपेणसमर्धयंति ॥ अथोअह्नएवैषबलिर्ह्रियते ॥ सप्तैतदहरतिग्रा
ह्यागृह्यंते ॥ सप्तवैशीर्षण्याःप्राणाः ॥ असावादित्यःशिरःप्रजानां ॥ शीर्ष
न्नेवप्रजानांप्राणान्दधाति ॥ तस्मात्सप्तशीर्षन्प्राणाः ॥ इंद्रोवृत्रंहत्वा ॥
असुरान्पराभाव्य ॥ सइमान्लोकानभ्यजयत् ॥ तस्यासौलोकोनभिजित
आसीत् ॥ तंविश्वकर्माभूत्वाभ्यजयत् ॥ यद्वैश्वकर्मणोगृह्यते ॥ सुवर्गस्य
लोकस्याभिजित्यै ॥ प्रवाएतेस्माल्लोकाच्च्यवंते ॥ येवैश्वकर्मणंगृह्णते ॥
आदित्यश्चोगृह्यते ॥ इयंवाअदितिः ॥ अस्यामेवप्रतितिष्ठंति ॥ अन्यो
न्योगृह्यते ॥ विश्वान्येवान्येनकर्माणिकुर्वाणायंति ॥ अस्यामन्येनप्रति
तिष्ठंति ॥ तावापराधात्संवत्सरस्यान्योन्योगृह्येते ॥ तावुभौसहमहाव्र

तेगृंह्णेते ॥ यज्ञस्यैवांतंगत्वा ॥ उभयोर्लोकयोःप्रतितिष्ठंति ॥ अक्र्यंमु
कथंभवति ॥ अन्नाद्यस्यावरुध्यै ॥ २ ॥ इंद्रोवृत्रं९हत्वा ॥ असुरान्प
राभाव्य ॥ सोमावास्यांप्रत्यागच्छत् ॥ तेपितरःपूर्वेद्युरागच्छन् ॥ पितॄ
न्यज्ञोगच्छत् ॥ तंदेवाःपुनरयाचंत ॥ तमेभ्योनपुनरददुः ॥ तेब्रुवन्व
रंवृणामहै ॥ अथवःपुनर्दास्यामः ॥ अस्मभ्यमेवपूर्वेद्युःक्रियाताइति ॥
तमेभ्यःपुनरददुः ॥ तस्मात्पितृभ्यःपूर्वेद्युःक्रियते ॥ यत्पितृभ्यःपूर्वेद्युः
करोति ॥ पितृभ्यएवतद्यज्ञंनिष्क्रीययजमानःप्रतनुते ॥ सोमायपि
तृपीतायस्वधानमइत्याह ॥ पितुरेवाधिसोमपीथमवरुंधे ॥ नहिपिता
प्रमीयमाणआहैषसोमपीथइति ॥ इंद्रियंवैसोमपीथः ॥ इंद्रियमेवसोम
पीथमवरुंधे ॥ तेनेंद्रियेणद्वितीयांजायामभ्यश्नुते ॥ एतद्वैब्राह्मणंपुरा
वाजश्रवसाविदामक्रन् ॥ तस्मात्तेद्वेद्वेजायेअभ्याक्षत ॥ यएवंवेद ॥

अभिद्वितीयांजायामश्नुते ॥ अग्नयेकव्यवाहनायस्वधानमइत्याह ॥
यएवपितृणामग्निः ॥ तंप्रीणाति ॥ तिस्रआहुतीर्जुहोति ॥ त्रिर्निद
धाति ॥ षट्संपद्यंते ॥ षड्वाऋतवः ॥ ऋतूनेवप्रीणाति ॥ तूष्णींमेक्ष
णमादधाति ॥ अस्तिवाहिषष्ठऋतुर्नवा ॥ देवान्वैपितॄन्प्रीतान् ॥ मनु
ष्याःपितरोनुप्रपिबते ॥ तिस्रआहुतीर्जुहोति ॥ त्रिर्निदधाति ॥ षट्
संपद्यंते ॥ षड्वाऋतवः ॥ ऋतवःखलुवैदेवाःपितरः ॥ ऋतूनेवदेवान्पि
तॄन्प्रीणाति ॥ तान्प्रीतान् ॥ मनुष्याःपितरोनुप्रपिबते ॥ सकृदाच्छिन्नं
बर्हिर्भवति ॥ सकृदिवहिपितरः ॥ त्रिर्निदधाति ॥ तृतीयेवाइतोलोके
पितरः ॥ तानेवप्रीणाति ॥ पराङावर्तते ॥ ह्रीकाहिपितरः ॥ ओष्म
णोव्यावृतउपास्ते ॥ ऊष्मभागाहिपितरः ॥ ब्रह्मवादिनोवदंति ॥
प्राश्या३न्नप्राश्या३मिति ॥ यत्प्राश्नीयात् ॥ जन्यमन्नमद्यात् ॥ प्रमायु

कःस्यात् ॥ यन्नप्राश्नीयात् ॥ अहविःस्यात् ॥ पितृभ्यआवृश्च्येत ॥ अव
घ्रेयमेव ॥ तन्नेवप्राशितंनेवाप्राशितं ॥ वीरंवावैपितरःप्रयंतोहरंति ॥ वीरं
वांददति ॥ दशांछिनत्ति ॥ हरणभागाहिपितरः ॥ पितॄनेवनिरवदयते ॥
उत्तरआयुषिलोमछिंदीत ॥ पितॄणांहोताहिनेदीयः ॥ नमस्करोति ॥
नमस्कारोहिपितॄणां ॥ नमोवःपितरोरसाय ॥ नमोवःपितरःशुष्माय ॥
नमोवःपितरोजीवाय ॥ नमोवःपितरःस्वधायै ॥ नमोवःपितरोमन्यवे ॥
नमोवःपितरोघोराय ॥ पितरोनमोवः ॥ यएतस्मिंल्लोकेस्थ ॥ युष्मां
स्तेनु ॥ येस्मिंल्लोके ॥ मांतेनु ॥ यएतस्मिंल्लोकेस्थ ॥ यूयंतेषांवसि
ष्ठाभूयास्त ॥ येस्मिंल्लोके ॥ अहंतेषांवसिष्ठोभूयासमित्याह ॥ वसिष्ठः
समानानांभवति ॥ यएवंविद्वान्पितृभ्यःकरोति ॥ एषवैमनुष्याणांयज्ञः ॥
देवानांवाइतरेयज्ञाः ॥ तेनवाएतत्पितृलोकेचरति ॥ यत्पितृभ्यःकरोति ॥

सईश्वरःप्रमेतोः ॥ प्राजापत्ययर्चापुनरैति ॥ यज्ञोवैप्रजापतिः ॥ यज्ञे
नैवसहपुनरैति ॥ नप्रमायुकोभवति ॥ पितृलोकेवाएतद्यजमानश्च
रति ॥ यत्पितृभ्यःकरोति ॥ सईश्वरआर्तिमार्तोः ॥ प्रजापतिस्त्वावैनं
ततउन्नेतुमर्हतीत्याहुः ॥ यत्प्राजापत्ययर्चापुनरैति ॥ प्रजापतिरेवैनं
ततउन्नयति ॥ नार्तिमार्छतियजमानः ॥ ३ ॥ यत्पुण्यंनक्षत्रं ॥ तद्वद्
कुर्वीतोपव्युषं ॥ यदावैसूर्यउदेति ॥ अथनक्षत्रंनैति ॥ यावतितत्रसूर्यो
गच्छेत् ॥ यत्रजघन्यंपश्येत् ॥ तावतिकुर्वीतयत्कारीस्यात् ॥ पुण्याह
एवकुरुते ॥ तानिवाएतानियमनक्षत्राणि ॥ यान्येवदेवनक्षत्राणि ॥
तेषुकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुरुते ॥ त्रीणित्रीणिवैदेवानामृ
द्धानि ॥ त्रीणिछंदांसि ॥ त्रीणिसवनानि ॥ त्रयइमेलोकाः ॥ ऋध्या
मेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति ॥ ४ ॥ अनुमत्यैपुरोडाशमष्टाकपालं

निर्वपति ॥ येप्रत्यंचःशम्यायाअवशीयंते ॥ तंनैर्ऋतमेककपालं॥ इयं
वाअनुमतिः ॥ इयंनिर्ऋतिः ॥ नैर्ऋतेनपूर्वेणप्रचरति ॥ पाप्मानमेव
निर्ऋतिंपूर्वांनिरवदयते ॥ एककपालोभवति ॥ एकधैवनिर्ऋतिंनिरव
दयते ॥ यदहुत्वागार्हपत्यईयुः ॥ रुद्रोभूत्वाग्निरनूत्थाय ॥ अध्वर्युंच
यजमानंचहन्यात् ॥ वीहिस्वाहाहुतिंजुषाणइत्याह ॥ आहुत्यैवैनꣳश
मयति ॥ नार्तिमार्च्छेत्यध्वर्युर्नयजमानः ॥ एकोल्मुकेनयंति ॥ तद्धि
निर्ऋत्यैभागधेयं ॥ इमांदिशंयंति ॥ एषावैनिर्ऋत्यैदिक् ॥ स्वायामेव
दिशिनिर्ऋतिंनिरवदयते ॥ स्वकृतइरिणेजुहोतिप्रदरेवा ॥ एतद्वैनिर्ऋ
त्याआयतनं ॥ स्वएवायतनेनिर्ऋतिंनिरवदयते ॥ एषतेनिर्ऋतेभाग
इत्याह ॥ निर्दिशत्येवैनां ॥ भूतेहविष्मत्यसीत्याह ॥ भूतिमेवोपावर्तते ॥
मुंचेममꣳहसइत्याह ॥ अꣳहसएवैनंमुंचति ॥ अंगुष्ठाभ्यांजुहोति ॥

अंततएवनिर्ऋतिंनिरवदयते ॥ कृष्णंवासःकृष्णतूषंदक्षिणा ॥ एतद्वै
निर्ऋत्यैरूपं ॥ रूपेणैवनिर्ऋतिंनिरवदयते ॥ अप्रतीक्षमायंति ॥ निर्ऋ
त्याअंतर्हित्यै ॥ स्वाहानमोयइदंचकारेतिपुनरेत्यगार्हपत्येजुहोति ॥
आहुत्यैवनमस्यंतोगार्हपत्यमुपावर्तते ॥ आनुमतेनप्रचरति ॥ इयंवा
अनुमतिः ॥ इयमेवास्मैराज्यमनुमन्यते ॥ धेनुर्दक्षिणा ॥ इमामेवधेनुं
कुरुते ॥ आदित्यंचरुंनिर्वपति ॥ उभयीष्वेवप्रजास्वभिषिच्यते ॥ दैवी
षुचमानुषीषुच ॥ वरोदक्षिणा ॥ वरोहिराज्यꣳसमृद्ध्यै ॥ अग्नावैष्ण
वमेकादशकपालंनिर्वपति ॥ अग्निःसर्वादेवताः ॥ विष्णुर्यज्ञः ॥ देवता
श्चैवयज्ञंचावरुंधे ॥ वामनोवहीदक्षिणा ॥ यद्वही ॥ तेनाग्नेयः ॥ यद्वा
मनः ॥ तेनवैष्णवःसमृद्ध्यै ॥ अग्नीषोमीयमेकादशकपालंनिर्वपति ॥
अग्नीषोमाभ्यांवाइंद्रोवृत्रमहन्निति ॥ यदग्नीषोमीयमेकादशकपालंनिर्व

पति ॥ वार्त्रघ्नमेवाविजित्यै ॥ हिरण्यंदक्षिणासमृद्ध्यै ॥ इंद्रोवृत्रंहत्वा ॥
देवताभिश्चेंद्रियेणचव्यार्ध्यत ॥ सएतमैंद्राग्नमेकादशकपालमपश्यत् ॥
तंनिरवपत् ॥ तेनवैसदेवताश्चेंद्रियंचावारुंध ॥ यदैंद्राग्नमेकादशक
पालंनिर्वपति ॥ देवताश्चैवतेनेंद्रियंचयजमानोवरुंधे ॥ ऋषभोवहीद
क्षिणा ॥ यद्वही ॥ तेनाग्नेयः ॥ यदृषभः ॥ तेनैंद्रःसमृद्ध्यै ॥ आग्नेय
मष्टाकपालंनिर्वपति ॥ ऐंद्रंदधि ॥ यदाग्नेयोभवति ॥ अग्निर्वैयज्ञमुखं ॥
यज्ञमुखमेवर्धिंपुरस्ताद्धत्ते ॥ यदैंद्रंदधि ॥ इंद्रियमेवावरुंधे ॥ ऋषभो
वहीदक्षिणा ॥ यद्वही ॥ तेनाग्नेयः ॥ यदृषभः ॥ तेनैंद्रःसमृद्ध्यै ॥
यावतीर्वैप्रजाओषधीनामहुतानामाश्नन् ॥ ताःपराभवन् ॥ आग्रयणं
भवतिहुताद्याय ॥ यजमानस्यापराभावाय ॥ देवावाओषधीष्वाजि
मंयुः ॥ ताइंद्राग्नीउदजयतां ॥ तावेतमैंद्राग्नंद्वादशकपालंनिरवृणातां ॥

यदैंद्राग्नोभवत्युज्जित्यै ॥ द्वादशकपालोभवति ॥ द्वादशमासाःसंवत्सरः ॥
संवत्सरेणैवास्माअन्नमवरुंधे ॥ वैश्वदेवश्चरुर्भवति ॥ वैश्वदेवंवाअन्नं ॥
अन्नमेवास्मैस्वदयति ॥ प्रथमजोवत्सोदक्षिणासमृध्द्यै ॥ सौम्यꣳश्या
माकंचरुंनिर्वपति ॥ सोमोवाअकृष्टपच्यस्यराजा ॥ अकृष्टपच्यमेवास्मै
स्वदयति ॥ वासोदक्षिणा ॥ सौम्यꣳहिदेवतयावासःसमृध्द्यै ॥ सरस्व
त्यैचरुंनिर्वपति ॥ सरस्वतेचरुं ॥ मिथुनमेवावरुंधे ॥ मिथुनौगावौद
क्षिणासमृध्द्यै ॥ एतिवाएषयज्ञमुखादृध्द्याः ॥ योग्नेर्देवतायाएति ॥
अष्टावेतानिहवीꣳषिभवंति ॥ अष्टाक्षरागायत्री ॥ गायत्रोग्निः ॥ तेनै
वयज्ञमुखादृध्द्याअग्नेर्देवतायैनैति ॥ ८ ॥ कशिपुंकशिपव्याय ॥ उप
बर्हणमुपबर्हण्याय ॥ आंजनमांजन्याय ॥ अभ्यंजनमभ्यंजन्याय ॥
यथाभागमेवैनान्प्रीणाति ॥ त्र्यंबकंयजामहइत्याह ॥ मृत्योर्मुक्षीयमा

मृतादितिवावैतदाह ॥ उत्किरंति ॥ भगस्यलीप्संते ॥ मूतेंकृत्वास
जंति ॥ यथाजनंयतेवसंकरोति ॥ तादृगेवतत् ॥ एषतेरुद्रभागइत्याह
निरवत्यै ॥ अप्रतीक्षमायंति ॥ अपःपरिषिंचति ॥ रुद्रस्यांतर्हित्यै ॥
प्रवाएतेस्माल्लोकाच्च्यवंते ॥ येत्र्यंबकैश्चरंति ॥ आदित्यंचरुंपुनरेत्यनि
र्वपति ॥ इयंवाअदितिः ॥ अस्यामेवप्रतितिष्ठंति ॥ ६ ॥ इतिप्रथमा
ष्टकसमाप्तः ॥

प्रजापतिःसोमꣳराजानमसृजत ॥ तंत्रयोवेदाअन्वसृज्यंत ॥ तान्ह
स्तेकुरुत ॥ अथहसीतासावित्री ॥ सोमꣳराजानंचकमे ॥ श्रद्धामुस
चकमे ॥ साहपितरंप्रजापतिमुपससार ॥ तꣳहोवाच ॥ नमस्तेअस्तु
भगवः ॥ उपत्वायानि ॥ प्रत्वापद्ये ॥ सोमंवैराजानंकामये ॥ श्रद्धा
मुसकामयतइति ॥ तस्याउहस्थागरमलंकारंकल्पयित्वा ॥ दशहोतारं

पुरस्ताद्व्याख्याय ॥ चतुर्होतारंदक्षिणतः ॥ पंचहोतारंपश्चात् ॥ षड्ढो
तारमुत्तरतः ॥ सप्तहोतारमुपरिष्टात् ॥ संभारैश्चपत्नीभिश्चमुखेलंकृत्य ॥
आस्यार्धंव्राज ॥ ताꣳहोदीक्षयोवाच ॥ उपमावर्तस्वेति ॥ तꣳहोवाच ॥
भोगंतुमआचक्ष्व ॥ एतन्मआचक्ष्व ॥ यत्तेपाणाविति ॥ तस्याउहत्रीन्
वेदान्प्रददौ ॥ तस्मादुहस्त्रियोभोगमेवहारयंते ॥ सयःकामयेतप्रियःस्या
मिति ॥ यंवाकामयेतप्रियःस्यादिति ॥ तस्माएतꣳस्थागरमलंकारंकल्प
यित्वा ॥ दशहोतारंपुरस्ताद्व्याख्याय ॥ चतुर्होतारंदक्षिणतः ॥ पंच
होतारंपश्चात् ॥ षड्ढोतारमुत्तरतः ॥ सप्तहोतारमुपरिष्टात् ॥ संभारैश्च
पत्नीभिश्चमुखेलंकृत्य ॥ आस्यार्धंव्रजेत् ॥ प्रियोहैवभवति ॥ १ ॥ ब्रह्मा
त्मन्वदसृजत ॥ तदकामयत ॥ समात्मनापद्येयेति ॥ आत्मन्नात्मन्नि
त्यामंत्रयत ॥ तस्मैदशमꣳहूतःप्रत्यशृणोत् ॥ सदशहूतोभवत् ॥ दश

हूतोहवैनामैषः ॥ तंवाएतंदशहूतꣳसंतं ॥ दशहोतेत्याचक्षतेपरोक्षेण ॥
परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैसप्तमꣳहूतः
प्रत्यशृणोत् ॥ ससप्तहूतोभवत् ॥ सप्तहूतोहवैनामैषः ॥ तंवाएतꣳसप्त
हूतꣳसंतं ॥ सप्तहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥
आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैषष्ठꣳहूतःप्रत्यशृणोत् ॥ सषड्ढूतोभ
वत् ॥ षड्ढूतोहवैनामैषः ॥ तंवाएतꣳषड्ढूतꣳसंतं ॥ षड्ढोतेत्याचक्षतेप
रोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मै
पंचमꣳहूतःप्रत्यशृणोत् ॥ सपंचहूतोभवत् ॥ पंचहूतोहवैनामैषः ॥
तंवाएतंपंचहूतꣳसंतं ॥ पंचहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइव
हिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैचतुर्थꣳहूतःप्रत्यशृणोत् ॥
सचतुर्हूतोभवत् ॥ चतुर्हूतोहवैनामैषः ॥ तंवाएतंचतुर्हूतꣳसंतं ॥

चतुर्होतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ तमब्रवीत् ॥
त्वंवैमेनेदिष्ठꣳहूतःप्रत्यश्रौषीः ॥ त्वयैनानाख्यातारइति ॥ तस्मान्नुहै
नाꣳश्चतुर्होतारइत्याचक्षते ॥ तस्माच्छुश्रूषुःपुत्राणाꣳहृद्यतमः ॥ नेदिं
ष्ठोहृद्यतमः ॥ नेदिष्ठोब्रह्मणोभवति ॥ यएवंवेद ॥ २ ॥ अग्नेरक्षाणो
अꣳहसः ॥ प्रतिष्मदेवरीषतः ॥ तपिष्ठैरजरोदह ॥ त्वमग्नेअयास्यया
सन्मनसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषजं ॥ वयꣳसोम
व्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तोअशीमहि ॥ इहैवैधिमाऽव्यथिष्ठाः ॥
पर्वतइवाविचाचलिः ॥ इन्द्रइवेहध्रुवस्तिष्ठ ॥ इहराष्ट्रमुधारय ॥ विच
क्रमेपृथिवीमेषएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् ॥ ध्रुवासोअस्यकीरयो
जनासउरुक्षितिꣳसुजनिमाचकार ॥ त्रिर्देवःपृथिवीमेषएतांविचक्रमे
शतर्चसंमहित्वा ॥ प्रविष्णुरस्तुतवसस्तवीयान्त्वेषꣳह्यस्यस्थविरस्य

नाम ॥ त्वँसोमक्रतुभिःसुक्रतुर्भूः ॥ त्वंदक्षैःसुदक्षोविश्ववेदाः ॥ त्वं
वृषावृषत्वेभिर्महित्वा ॥ द्युम्नेभिर्द्युम्न्यभवोनृचक्षाः ॥ समानीवआ
कूतिःसमानाहृदयानिवः ॥ समानमस्तुवोमनोयथावःसुसहासति ॥
आनोअग्नेसुकेतुना ॥ रयिंविश्वायुपोषसं ॥ मार्डीकंधेहिजीवसे ॥ त्वँ
सोममहेभगं ॥ त्वंयूनंऋतायते ॥ दक्षंदधासिजीवसे ॥ तदस्यप्रियम
भिपाथोअश्यांनरोयत्रदेवयवोमदंति॥ उरुक्रमस्यसहिबंधुरित्थाविष्णोः
पदेपरमेमध्वउत्सः ॥ गौरीमिमायसलिलानितक्षत्येकपदीद्विपदीसा
चतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ ३ ॥
आकूत्यैत्वाकामायत्वासमृधेत्वा ॥ पुरोदधेअमृतत्वायजीवसे ॥ आकू
तिमस्यावसे ॥ काममस्यसमृद्ध्यै ॥ इंद्रस्ययुंजतेधियः ॥ आकूतिंदेवीं
मनसःपुरोदधे ॥ यज्ञस्यमातासुहवामेअस्तु ॥ यदिच्छामिमनसास

कामः ॥ विदेयमेनन्हृदयेनिविष्टं ॥ क्षेत्रियैत्वानिर्ऋत्यैत्वा ॥ द्रुहोमुंचा
मिवरुणस्यपाशात् ॥ अनागसंब्रह्मणेत्वाकरोमि ॥ शिवेतेद्यावापृथिवी
उभेइमे ॥ शंतेअग्निःसहाद्भिरस्तु ॥ शंद्यावापृथिवीसहौषधीभिः ॥
शमंतरिक्षꣳसहवातेनते ॥ शंतेचतस्रःप्रदिशोभवंतु ॥ यादैवीश्चतस्रः
प्रदिशः ॥ वातपत्नीरभिसूर्योविचष्टे ॥ तासांत्वाजरसआदधामि ॥
प्रयक्ष्मएतुनिर्ऋतिंपराचैः ॥ सूर्यमृतंतमसोग्राह्यायत् ॥ देवाअमुंचन्न
सृजन्व्येनसः ॥ एवमहमिमंक्षेत्रियाज्जामिशꣳसात् ॥ द्रुहोमुंचामिवरु
णस्यपाशात् ॥ नाकेसुपर्णमुपयत्पतंतꣳहृदावेनंतोअभ्यचक्षतत्वा ॥
हिरण्यपक्षंवरुणस्यदूतंयमस्ययोनौशकुनंभुरण्युं ॥ अप्सुमेसोमोअब्रवी
दंतर्विश्वानिभेषजा ॥ अग्निंचविश्वशंभुवमापश्चविश्वभेषजीः ॥ यदप्सु
तेसरस्वतिगोष्वश्वेषुयन्मधु ॥ तेनमेवाजिनीवतिमुखमङ्धिसरस्वति ॥

यातेअग्नेयज्ञियातनूस्तयेह्यारोहात्मात्मानं ॥ अच्छावसूनिकृण्वन्नस्मे
नर्यापुरूणि ॥ यज्ञोभूत्वायज्ञमासीदस्वांयोनिं ॥ जातवेदोभुवआजाय
मानःसक्षयएहि ॥ उपावरोहजातवेदःपुनस्त्वं ॥ देवेभ्योहव्यंवहनः
प्रजानन् ॥ आयुःप्रजाꣳरयिमस्मासुधेहि ॥ अजस्रोदीदिहिनोदुरोणे
॥४॥ येसमानाःसमनसः ॥ पितरोयमराज्ये ॥ तेषांलोकःस्वधानमः ॥
यज्ञोदेवेषुकल्पतां ॥ येसजाताःसमनसः ॥ जीवाजीवेषुमामकाः ॥
तेषाꣳश्रीर्मयिकल्पतां ॥ अस्मिन्लोकेशतꣳसमाः ॥ देवस्यत्वासवितुः
प्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ अश्विनोर्भैषज्येन ॥
तेजसेब्रह्मवर्चसायाभिषिंचामि ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनो
र्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ सरस्वत्यैभैषज्येन ॥ वीर्यायान्नाद्यायाभि
षिंचामि ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ता

भ्यां ॥ इंद्रस्येंद्रियेण ॥ श्रियैयशसेबलायाभिषिंचामि ॥ ५ ॥ उशंत
स्त्वाहवामहआनोअग्नेसुकेतुना ॥ त्वꣳसोममहेभगंत्वꣳसोमप्रचिकि
तोमनीषा ॥ त्वयाहिनःपितरःसोमपूर्वेत्वꣳसोमपितृभिःसंविदानः ॥
बर्हिषदःपितरआहंपितृन् ॥ उपहूताःपितरोग्निष्वात्ताःपितरः ॥ अग्नि
ष्वात्तानृतुमतोहवामहे ॥ नराशꣳसेसोमपीथंयआशुः ॥ तेनोअर्वंतः
सुहवाभवंतु ॥ शंनोभवंतुद्विपदेशंचतुष्पदे ॥ येअग्निष्वात्तायेनग्निष्वा
त्ताः ॥ अꣳहोमुचःपितरःसोम्यासः ॥ परेवरेमृतासोभवंतः ॥ अधि
ब्रुवंतुतेअवंत्वस्मान् ॥ वान्यायैदुग्धेजुषमाणाःकरंभं ॥ उदीराणाअवरे
परेच ॥ अग्निष्वात्ताऋतुभिःसंविदानाः ॥ इंद्रवंतोहविरिदंजुषंतां ॥
यदग्नेकव्यवाहनत्वमग्नईडितोजातवेदः ॥ मातलीकव्यैः ॥ येतातृपु
र्देवत्राजेहमानाः ॥ होत्रावृधस्तोमतष्टासोअर्कैः ॥ आग्नेयाहिसुविदत्रे

॥ ३४ ॥

भिरर्वाङ् ॥ सत्यैःकव्यैःपितृभिर्घर्मसद्भिः ॥ हव्यवाहमजरंपुरुप्रियं ॥
अग्निंघृतेनहविषासपर्यन् ॥ उपासदंकव्यवाहंपितृणां ॥ सनःप्रजांवीर
वतीꣳसमृण्वतु ॥ ६ ॥ अषाढंयुत्सुपृतनासुपप्रिं ॥ सुवर्षामप्स्वांवृज
नंस्यगोपां ॥ भरेषुजाꣳसुक्षितिꣳसुश्रवसं ॥ जयंतंत्वामनुमदेमसोम ॥
तिष्ठाहरीरथआयुज्यमानायाहि ॥ वायुर्ननियुतोनोअच्छ ॥ पिबास्यंधो
अभिसृष्टोअस्मे ॥ इंद्रस्वाहाररिमातेमदाय ॥ कस्यवृषासुतेसचा ॥
नियुत्वान्वृषभोरणत् ॥ वृत्रहासोमपीतये ॥ इंद्रंवयंमहाधने ॥ इंद्रम
र्भेहवामहे ॥ युजंवृत्रेषुवज्रिणं ॥ द्वितायोवृत्रहंतमः ॥ विदइंद्रःशत
क्रतुः ॥ उपनोहरिभिःसुतं ॥ ससूरआजनयन्ज्योतिरिंद्रं ॥ अयाधि
यातरणिरद्रिंबर्हाः ॥ ऋतेनशुष्मीनवमानोअर्कैः ॥ व्युस्त्रिधोअस्तोअ
द्रिंबिभेद ॥ उतत्यदाश्वाश्वियं ॥ यदिंद्रनाहुषीष्वा ॥ अग्नेविष्णुप्रतीद

यत् ॥ भरे॑ष्विंद्र॒ꣳसु॒हव॒ꣳहवामहे ॥ अ॒ꣳहो॒मुच॒ꣳसु॒कृतं॒दैव्यं॒जनं॑ ॥
अ॒ग्निंमि॒त्रंवरु॑ण॒ꣳसा॒तये॒भगं॑ ॥ द्यावा॑पृथि॒वीम॒रुतः॑स्व॒स्तये॑ ॥ म॒हिक्षेत्रं॑
पु॒रुश्चं॒द्रंवि॑वि॒द्वान् ॥ आदि॒त्सखि॑भ्यश्च॒रथ॒ꣳसमै॑रत् ॥ इं॒द्रो॒नृभि॑रजन्
दी॒द्यानः॑सा॒कं ॥ सूर्य॑मु॒षसं॑गा॒तुम॒ग्निं ॥ उ॒रुं॑नो॑लो॒कमनु॑नेषिवि॒द्वान् ॥
सु॒वर्व॒ज्ज्योति॒रभ॑य॒ꣳस्व॒स्ति ॥ ऋ॒ष्वातं॑इंद्र॒स्थवि॑रस्यबा॒हू ॥ उप॑स्थेयाम
श॒र॒णाबृ॒हंता॑ ॥ आनो॒विश्वा॑भिरू॒तिभिः॑स॒जोषाः॑ ॥ ब्रह्म॑जुषा॒णोह॑र्यश्व
या॒हि ॥ वरी॑वृ॒जत्स्थवि॑रेभिःसुशिप्र ॥ अ॒स्मेद॒धद्वृष॑ण॒ꣳशुष्म॑मिंद्र ॥
इं॒द्रा॑य॒गाव॑आ॒शिरं॑ ॥ दु॒दु॒ह्रेव॒ज्रिणे॒मधु॑ ॥ यत्सी॑मुप॒ह्वरे॑वि॒दत् ॥ तास्ते॑
वज्रि॒न्धे॒नवो॑जोजयु॒र्नः ॥ गभ॑स्तयो॒नियु॒तो॑वि॒श्ववा॑राः ॥ अह॑रह॒र्भूय॒इज्जो
गु॒वानाः ॥ पू॒र्णाइं॑द्र॒क्षु॒मतो॒भोज॑नस्य ॥ इ॒मांते॒धियं॒प्रभ॑रेम॒होम॒हीं ॥
अ॒स्यस्तो॒त्रेधि॒षणा॒यत्त॑आ॒नजे ॥ तमु॑त्स॒वेच॑प्रस॒वेच॑सास॒हिं ॥ इं॒द्रंदे॒वा

सःशर्वसामदन्ननु ॥ ७ ॥ येनावपत्सविताक्षुरेणसोमस्यराज्ञोवरुणस्य
विद्वान् ॥ तेनब्रह्माणोवपतेदमस्योर्जेम ँरय्यावर्चसा स ँसृजाथ ॥
वायोशतंहरीणांयुवस्वपोष्याणाम् । उतवातेसहस्रिणोरथआयातुपाजसा ॥
आनोनियुद्भिःशतिनीभिरध्वर ँसहस्रिणीभिरुपयाहियज्ञं ॥ वायोअ
स्मिन्हविषिमादयस्वयूयंपातस्वस्तिभिःसदानः ॥ रयीणांपतिंयजतंबृ
हन्तं ॥ अस्मिन्भरेनृतमंवाजसातौ ॥ प्रजापतिंप्रथमजामृतस्य ॥ यजा
मदेवमधिनोब्रवीतु ॥ प्रजापतेत्वंनिधिपाःपुराणः ॥ देवानांपिताजनि
ताप्रजानां ॥ पतिर्विश्वस्यजगतःपरस्पाः ॥ हविर्नोदेवविहवेजुषस्व ॥
तवेमेलोकाःप्रदिशोदिशश्च ॥ परावतोनिवतउद्वतश्च ॥ प्रजापतेविश्व
सृज्जीवधन्यइदंनोदेव ॥ प्रतिहर्यहव्यं ॥ प्रजापतिंप्रथमंयज्ञियानां ॥
देवानामग्रेयजतंयजध्वं ॥ सनोददातुद्रविण ँसुवीर्यं ॥ रायस्पोषंविष्य
तुनाभिमस्मे ॥ योरायईशेशतदायउक्थः ॥ यःपशूना ँरक्षितविष्ठि

तानां ॥ प्रजापतिःप्रथमजाऋतस्य ॥ सहस्रंधामाजुषताँहविर्नः ॥
प्रवःशुक्रायभानवेभरध्वं ॥ हव्यंमतिंचाग्नयेसुपूतं ॥ योदैव्यानिमानु
षाजनूँषि ॥ अंतर्विश्वानिविद्मनाजिगाति ॥ अच्छागिरोमतयोदेव
यंतीः ॥ अग्निंयंतिद्रविणंभिक्षमाणाः ॥ सुसंदृशँसुप्रतीकँस्वंचं ॥
हव्यवाहमरतिंमानुषाणां ॥ अग्नेत्वमस्मद्युयोध्यमीवाः ॥ अनग्नित्राअ
भ्यमंतकृष्टीः ॥ पुनरस्मभ्यँसुवितायदेव ॥ क्षांविश्वेभिरजरेभिर्यजत्र ॥
प्रकारवोमननावच्यमानाः ॥ देवद्रीचींनयथदेवयंतः ॥ दक्षिणावाड्वा
जिनीप्राच्येति ॥ हविर्भरंत्यग्नयेघृताची ॥ बृहस्पतिःप्रथमंजायमानः ॥
महोज्योतिषःपरमेव्योमन् ॥ सप्तास्यस्तुविजातोरवेण ॥ विसप्तरश्मिर
धमत्तमाँसि ॥ बृहस्पतिःसमजयद्वसूनि ॥ महोव्रजान्गोमतोदेव
एषः ॥ अपःसिषासन्त्सुवरप्रतीत्तः ॥ बृहस्पतिर्हंत्यमित्रमर्कैः ॥ ८ ॥

॥ सादन्यं
सोमोधेनुꣳसोमोअर्वंतमाशुं ॥ सोमोवीरंकर्मण्यंददातु ॥ त्वमिमाओषधीःसोम
विदथ्यꣳसभेयं ॥ पितुःश्रवणंयोददाशदस्मै ॥ त्वमाततंथोर्वंतरिक्षं ॥ त्वंज्योति
विश्वाः ॥ त्वमपोअंजनयस्त्वंगाः ॥ याते धामानिदिवियापृथिव्यां ॥ यापर्वतेष्वोषधी
षावितमोववर्थ ॥ यातेधामानिदिवियापृथिव्यां ॥ राजन्त्सोमप्रतिहव्यागृभाय ॥
ष्वप्सु ॥ तेभिर्नोविश्वैःसुमनाअहेडन् ॥ राजन्त्सोमप्रतिहव्यागृभाय ॥ उभेतेविश्वरजंसीपृथि
परोमात्रयातनुवांवृधानन्नतेमहित्वमन्वश्नुवंति ॥ शुचीनां ॥ शुचिꣳ
व्याविष्णोदेवत्वंपरमस्यवित्से ॥ शुचींवोहव्यामरुतःशुचीनां ॥ शुचिंजन्मानः
हिनोम्यध्वरꣳशुचिभ्यः ॥ ऋतेनसत्यमृतसापआयन् ॥ शुचिजन्मानः
शुचयःपावकाः ॥ आनोविश्वेअस्क्रागमंतुदेवाः ॥ मित्रोअर्यमावरुणः
सजोषाः ॥ भुवन्यथानोविश्वेवृधासः ॥ करन्त्सुषाहाविथुरन्नशवः ॥ तेसौभगं
शन्नोदेवाविश्वदेवाभवंतु ॥ शꣳसरस्वतीसहधीभिरस्तु ॥

वीरवद्योमदप्नः ॥ दधातनद्राविणंचित्रमस्मे ॥ अग्नेयाहिदूत्यंवारिषेण्यः ॥
देवाँ अच्छाब्रह्मकृतागणेन ॥ सरस्वतीमरुतोअश्विनापः ॥ यक्षिदेवा
न्रत्नधेयायविश्वान् ॥ द्यौःपितःपृथिविमातरध्रुक् ॥ अग्नेभ्रातर्वसवो
मृडतानः ॥ विश्वआदित्याअदितेसजोषाः ॥ अस्मभ्यँशर्मबहुलंवि
यंत ॥ युवंवस्त्राणिपीवसावसाथे ॥ युवोरच्छिद्रामंतवोहसर्गाः ॥ अवा
तिरतमनृतानिविश्वा ॥ ऋतेनमित्रावरुणासचेथे ॥ अयंमित्रोनमस्यः
सुशेवः ॥ राजासुक्षत्रोअजनिष्टवेधाः ॥ तस्यवयँसुमतौयज्ञियस्य ॥
अपिभद्रेसौमनसेस्याम ॥ अनमीवासइडयामदंतः ॥ मितज्ञवोवरिम
न्नापृथिव्याः ॥ आदित्यस्यव्रतमुपक्षियंतः ॥ वयंमित्रस्यसुमतौस्याम ॥
मित्रंनईँशिम्यागोषुगव्यवः ॥ स्वाधियोविदथेअप्स्वजीजनन् ॥
अरेजयतांरोदसीपाजसागिरा ॥ प्रतिप्रियंयजतंजनुषामवः ॥ महाँ

आदित्योनमसोपसद्यः ॥ यातयज्ञंनोगृणतेसुशेवः ॥ तस्माएतत्पन्य
तमायजुष्टं ॥ अग्नौमित्रायहविराजुहोत ॥१॥ इतिद्वितीयाष्टकःसमाप्तः ॥

अपःप्रणयति ॥ श्रद्धावाआपः ॥ श्रद्धामेवारभ्यप्रणीयप्रचरति ॥
अपःप्रणयति ॥ यज्ञोवाआपः ॥ यज्ञमेवारभ्यप्रणीयप्रचरति ॥ अपः
प्रणयति ॥ वज्रोवाआपः ॥ वज्रमेवभ्रातृव्येभ्यःप्रहृत्यप्रणीयप्रचरति ॥
अपःप्रणयति ॥ आपोवैरक्षोघ्नीः ॥ रक्षसामपहत्यै ॥ अपःप्रणयति ॥
आपोवैदेवानांप्रियंधाम ॥ देवानामेवप्रियंधामप्रणीयप्रचरति ॥ अपः
प्रणयति ॥ आपोवैसर्वादेवताः ॥ देवताएवारभ्यप्रणीयप्रचरति ॥ आपो
वैशांताःशांताभिरेवास्यशुचंशमयति ॥ अमृतंवाआपस्तस्मादद्भिरवं
तांतमभिषिंचंति ॥ आशिषमेवैतामाशास्तेपूर्णपात्रे ॥ अंततोनुष्टुभा ॥
चतुष्पद्वाएतच्छंदःप्रतिष्ठितंपालियैपूर्णपात्रेभवति ॥ अस्मिन्लोकेप्रति

तिष्ठानीति ॥ अस्मिन्नेवलोकेप्रतितिष्ठति ॥ अथोवाग्वाअनुष्टुक् ॥
वाङ्मिथुनं ॥ आपोरेतःप्रजननं ॥ एतस्माद्वैमिथुनाद्विद्योतमानस्तनयं
न्वर्षति ॥ रेतःसिंचन् ॥ प्रजाःप्रजनयन् ॥ यद्वैयज्ञस्यब्रह्मणायुज्यते ॥
ब्रह्मणावैतस्यविमोकः ॥ अद्भिःशांतिः ॥ विमुक्तंवाएतर्हियोक्तंब्रह्मणा ॥
आदायैनत्पत्नीसहापउपगृह्णीतेशांत्यै ॥ अंजलौपूर्णपात्रमानयति ॥
रेतएवास्यांप्रजांदधाति ॥ प्रजयाहिमनुष्यःपूर्णः ॥ मुखंविमृष्टे ॥ अव
भृथस्यैवरूपंकृत्वोत्तिष्ठति ॥ १ ॥ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं ॥
अस्ययज्ञस्यसुक्रतुं ॥ अंजंतित्वामध्वरेदेवयंतः ॥ वनस्पतेमधुनादै
व्येन ॥ यदूर्ध्वस्तिष्ठाद्द्रविणेहधत्तात् ॥ यद्वाक्षयोमातुरस्याउपस्थे ॥
युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःक
वयउन्नयंतिस्वाधियोमनसादेवयंतः ॥ यत्रवेत्थवनस्पतेदेवानांगुह्या

नामानि ॥ तत्रहव्यानिगामय ॥ याःपुरस्तात्प्रस्रवंत्युपरिष्टात्सर्वतं
श्रयाः ॥ ताभीरश्मिपवित्राभिःश्रद्धांयज्ञमारभे ॥ आकूत्यैत्वाकामाय
त्वासमृधेत्वा ॥ पुरोदधेअमृतत्वायजीवसे ॥ आकूतिमस्यावसे ॥ कामं
मस्यसमृद्ध्यै ॥ इंद्रस्ययुंजतेधियः ॥ आकूतिंदेवींमनसःपुरोदधे ॥
यज्ञस्यमातासुहवामेअस्तु ॥ यदिच्छामिमनसासकामः ॥ विदेयमेन
हृदयेनिविष्टं ॥ २ ॥ अग्नेव्रतपतेव्रतंचरिष्यामि ॥ तच्छकेयंतन्मे
राध्यतां ॥ वायोव्रतपतेव्रतंचरिष्यामि ॥ तच्छकेयंतन्मेराध्यतां ॥
आदित्यव्रतपतेव्रतंचरिष्यामि ॥ तच्छकेयंतन्मेराध्यतां ॥ व्रतानांव्रत
पतेव्रतंचरिष्यामि ॥ तच्छकेयंतन्मेराध्यतां ॥ अग्नेव्रतपतेव्रतमचा
रिषं ॥ तदशकंतन्मेराधि ॥ वायोव्रतपतेव्रतमचारिषं ॥ तदशकंतन्मे
राधि ॥ आदित्यव्रतपतेव्रतमचारिषं ॥ तदशकंतन्मेराधि ॥ व्रतानां

व्रतपतेव्रतमचारिषं ॥ तदशकंतन्मेराधि ॥ सकृदाच्छिन्नंबर्हिरूर्णा
मृदु ॥ स्योनंपितृभ्यस्त्वाभराम्यहं ॥ अस्मिन्त्सीदंतुमेपितरःसोम्याः ॥
पितामहाःप्रपितामहाश्चानुगैःसह ॥ एकमिषेविष्णुस्त्वान्वेतु ॥ द्वेऊर्जे
विष्णुस्त्वान्वेतु ॥ त्रीणिव्रतायविष्णुस्त्वान्वेतु ॥ चत्वारिमायोभवाय
विष्णुस्त्वान्वेतु ॥ पंचपशुभ्योविष्णुस्त्वान्वेतु ॥ षड्रायस्पोषायविष्णु
स्त्वान्वेतु ॥ सप्तसप्तभ्योहोत्राभ्योविष्णुस्त्वान्वेतु ॥ सखायःसप्तपदाअ
भूमसख्यंतेगमेयꣳसख्यात्तेमायोषꣳसख्यान्मेमायोष्ठाः ॥ ३ ॥ यद्वो
देवाअतिपादयानि ॥ वाचाचित्प्रयतंदेवहेडनं ॥ अरायोअस्माꣳअभि
दुच्छुनायते ॥ अन्यत्रास्मन्मरुतस्तन्निधेतन ॥ ततंमआपस्तदुतायते
पुनः ॥ स्वादिष्ठाधीतिरुचथायशस्यते ॥ अयꣳसमुद्रउतविश्वभेषजः ॥
स्वाहाकृतस्यसमुतृप्णुतर्भुवः ॥ यतंइंद्रभयामहेततोनोअभयंकृधि ॥

मघवन्छग्धितवतन्नऊतयेविद्विपोविमृधोजहि ॥ स्वस्तिदाविशस्पतिर्वृ
त्रहाविमृधोवशी ॥ वृषेन्द्रःपुरएतुनःस्वस्तिदाअभयंकरः ॥ अनाज्ञातं
यदाज्ञातंयज्ञस्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथं ॥
पुरुषसंमितोयज्ञोयज्ञःपुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्वꣳहिवेत्थ
यथातथं ॥ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्तासः ॥ अग्नि
ष्टद्धोताक्रतुविद्विजाननयजिष्ठोदेवाꣳऋतुशोयजाति ॥ ४ ॥ यद्देवादे
वहेडनं ॥ देवासश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचत ॥ ऋतस्यर्ते
नमामुत ॥ देवाजीवनकाम्यायत् ॥ वाचानृतमूदिम ॥ अग्निर्मातस्मा
देनसः ॥ गार्हपत्यःप्रमुंचतु ॥ दुरितायानिचकृम ॥ करोतुमामनेनसं ॥
ऋतेनद्यावापृथिवी ॥ ऋतेनत्वꣳसरस्वति ॥ ऋतान्मामुंचताꣳहसः ॥
यदन्यकृतमारिम ॥ सजातशꣳसादुतवाजामिशꣳसात् ॥ ज्यायसःशꣳ

सादुतवाकनीयसः ॥ अनाज्ञातंदेवकृतंयदेनः ॥ तस्मात्त्वमस्माञ्जात
वेदोमुमुग्धि ॥ यद्वाचायन्मनसा ॥ बाहुभ्यामूरुभ्यामष्ठीवद्भ्यां ॥ शिश्नै
र्यदनृतंचकृमावयं ॥ अग्निर्मातस्मादेनसः ॥ यद्धस्ताभ्यांचकरकिल्बि
षाणि ॥ अक्षाणांवग्नुमुपजिघ्नमानः ॥ दूरेपश्याचराष्ट्रभृच्च ॥ तान्य
प्सरसावनुदत्तामृणानि ॥ अदीव्यन्नृणंयदहंचकार ॥ यद्वादास्यन्त्संज
गाराजनेभ्यः ॥ अग्निर्मातस्मादेनसः ॥ यन्मयिमातागर्भेसति ॥ एन
श्चकारयत्पिता ॥ अग्निर्मातस्मादेनसः ॥ यदापिपेषमातरंपितरं ॥ पुत्रः
प्रमुदितोधयन् ॥ अहिंसितौपितरौमयातत् ॥ तदग्नेअनृणोभवामि ॥
यदंतरिक्षंपृथिवीमुतद्यां ॥ यन्मातरंपितरंवाजिहिंसिम ॥ अग्निर्मात
स्मादेनसः ॥ यदाशसानिशसायत्पराशसा ॥ यदेनश्चकृमानूतनंयत्पु
राणं ॥ अग्निर्मातस्मादेनसः ॥ अतिक्रामामिदुरितंयदेनः ॥ जहामि

रिग्निंपरमेसधस्थे ॥ यत्रयंतिसुकृतोनापिदुष्कृतः ॥ तमारोहामिसुकृतां
नुलोकं ॥ त्रितेदेवाअमृजतैतदेनः ॥ त्रितएतन्मनुष्येषुमामृजे ॥ ततो
मायदिकिंचिदानशे ॥ अग्निर्मातस्मादेनसः ॥ गार्हपत्यःप्रमुंचतु ॥
दुरितायानिचकृम ॥ करोतुमामनेनसं ॥ दिविजाताअप्सुजाताः ॥
याजाताओषधीभ्यः ॥ अथोयाअग्निजाआपः ॥ तानःशुंधंतुशुंधनीः ॥
यदापोनक्तंदुरितंचराम ॥ यद्वादिवानूतनंयत्पुराणं ॥ हिरण्यवर्णास्तत
उत्पुनीतनः ॥ इमंमेवरुणतत्त्वायामि ॥ त्वन्नोअग्नेसत्वन्नोअग्ने ॥ त्वम
ग्नेअयासि ॥ ५ ॥ इदमनुश्रेयोवसानमागन्मयद्गोजिद्धनजिदश्वजिद्यत् ॥
पर्णवनस्पतेरिवाभिनःशीयताँरयिःसचतांनःशचीपतिः ॥ साग्रहण्ये
ष्ट्यायजते ॥ इमांजनताँसंगृह्णानीति ॥ द्वादशारत्नीरशनाभवति ॥
द्वादशमासाःसंवत्सरः ॥ संवत्सरमेवावरुंधे ॥ मौंजीभवति ॥ ऊर्ग्वै

मुंजाः ॥ ऊर्जमेवावरुंधे ॥ चित्रानक्षत्रंभवति ॥ चित्रंवाएतत्कर्म ॥ यद
श्वमेधःसमृद्ध्यै ॥ पुण्यंनामदेवयजनमध्यवस्यति ॥ पुण्यामेवतेनकीर्ति
मभिजयति ॥ अपदातीनृत्विजःसमावहंत्यासुब्रह्मण्यायाः ॥ सुवर्गस्य
लोकस्यसमष्ट्यै ॥ केशश्मश्रुवपते ॥ नखानिनिकृंतते ॥ दतोधावते ॥
स्नाति ॥ अहतंवासःपरिधत्ते ॥ पाप्मनोपहत्यै ॥ वाचंयत्वोपवसति ॥
सुवर्गस्यलोकस्यगुप्त्यै ॥ रात्रिंजागरयंतआसते ॥ सुवर्गस्यलोकस्यस
मष्ट्यै ॥ ६ ॥ पूर्णाहुतिमुत्तमांजुहोति ॥ सर्ववैपूर्णाहुतिः ॥ सर्वमेवा
प्नोति ॥ अथोइयंवैपूर्णाहुतिः ॥ अस्यामेवप्रतितिष्ठति ॥ पूर्णाहुतिमु
त्तमांजुहोति ॥ प्रत्युत्तब्ध्यैसयत्वाय ॥ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसी
जायतामित्याह ॥ ब्राह्मणएवब्रह्मवर्चसंदधाति ॥ तस्मात्पुराब्राह्मणो
ब्रह्मवर्चस्यजायत ॥ आस्मिन्राष्ट्रेराजन्यइषव्यःशूरोमहारथोजायतामि

त्याह ॥ राजन्यएवशौर्यंमहिमानंदधाति ॥ तस्मात्पुराराजन्यइषव्यः
शूरोमहारथोजायत ॥ दोग्ध्रींधेनुरित्याह ॥ धेन्वामेवपयोदधाति ॥
तस्मात्पुरादोग्ध्रींधेनुरजायत ॥ वोढानड्वानित्याह ॥ अनडुह्येववीर्यंद
धाति ॥ तस्मात्पुरावोढानड्वानजायत ॥ आशुःसप्तिरित्याह ॥ अश्वे
एवजवंदधाति ॥ तस्मात्पुराशुरश्वोजायत ॥ पुरंधिर्योषेत्याह ॥ योषि
त्येवरूपंदधाति ॥ तस्मात्स्त्रीयुवतिःप्रियाभावुका ॥ जिष्णूरथेष्ठाइ
त्याह ॥ आहवैतत्रजिष्णूरथेष्ठाजायते ॥ यत्रैतेनयज्ञेनयजंते ॥ सभे
योयुवेत्याह ॥ योवैपूर्ववयसी ॥ ससभेयोयुवा ॥ तस्माद्युवापुमान्प्रियो
भावुकः ॥ आस्ययजमानस्यवीरोजायतामित्याह ॥ आहवैतत्रयजमा
नस्यवीरोजायते ॥ यत्रैतेनयज्ञेनयजंते ॥ निकामेनिकामेनःपर्जन्यो
वर्षत्वित्याह ॥ निकामेनिकामेहवैतत्रपर्जन्योवर्षति ॥ यत्रैतेनयज्ञेनय

जंते ॥ फलिन्योनओषधयःपच्यंतामित्याह ॥ फलिन्योहवैतत्रौषधयः
पच्यंते ॥ यत्रैतेनयज्ञेनयजंते ॥ योगक्षेमोनःकल्पतामित्याह ॥ कल्प
तेहवैतत्रप्रजाभ्योयोगक्षेमः ॥ यत्रैतेनयज्ञेनयजंते ॥ ७ ॥ सर्वेषुवा
एषुलोकेषुमृत्यवोन्वायत्ताः ॥ तेभ्योयदाहुतीर्नजुहुयात् ॥ लोकेलोक
एनंमृत्युर्विंदेत् ॥ मृत्यवेस्वाहामृत्यवेस्वाहेत्यभिपूर्वमाहुतीर्जुहोति ॥
लोकाल्लोकादेवमृत्युमवयजते ॥ नैनंलोकेलोकेमृत्युर्विंदति ॥ यदमुष्मै
स्वाहामुष्मैस्वाहेतिजुहुयात्संचक्षीत ॥ बहुंमृत्युममित्रंकुर्वीत ॥ मृत्यवे
स्वाहेत्येकस्माएवैकांजुहुयात् ॥ एकोवाअमुष्मिन्लोकेमृत्युः ॥ अशन
यामृत्युरेव ॥ तमेवामुष्मिन्लोकेवयजते ॥ भ्रूणहत्यायैस्वाहेत्यवभृथ
आहुतिंजुहोति ॥ भ्रूणहत्यामेवावयजते ॥ तदाहुः ॥ यद्भ्रूणहत्यापा
त्र्यार्थ ॥ कस्माद्यज्ञोपिक्रियतइति ॥ अमृत्युर्वाअन्योभ्रूणहत्यायाइत्याहुः ॥

भ्रूणहत्यावावमृत्युरिति ॥ यद्भ्रूणहत्यायैस्वाहेत्यवभृथआहुतिंजुहोति ॥
मृत्युमेवाहुत्यातर्पयित्वापरिपाणंकृत्वा ॥ भ्रूणघ्नेभेषजंकरोति ॥ एताꣳ
हवैमुंडिभऔदन्यवः ॥ भ्रूणहत्यायैप्रायश्चित्तिंविदांचकार ॥ योहास्या
पिप्रजायांब्राह्मणꣳहंति ॥ सर्वस्मैतस्मैभेषजंकरोति ॥ जुंबकायस्वाहे
त्यवभृथउत्तमामाहुतिंजुहोति ॥ वरुणोवैजुंबकः ॥ अंततएववरुणमव
यजते ॥ खलतेर्विक्लिधस्यशुक्लस्यपिंगाक्षस्यमूर्धञ्जुहोति ॥ एतद्वैवरुण
स्यरूपं ॥ रूपेणैववरुणमवयजते ॥ ८ ॥ जातवेदोयदिवापावकोसि ॥
वैश्वानरोयदिवावैद्युतोसि ॥ शंप्रजाभ्योयजमानायलोकं ॥ ऊर्जंपुष्टिं
दददभ्यावर्वृत्स्व ॥ अपमृत्युमपक्षुधं ॥ अपेतःशपथंजहि ॥ अधानो
अग्नआवह ॥ रायस्पोषꣳसहस्रिणं ॥ अग्निर्मैवाचिश्रितः ॥ वाग्घृ
दये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ वायुर्मेप्राणेश्रितः ॥

प्राणोहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ सूर्योमे
चक्षुषिश्रितः ॥ चक्षुर्हृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥
चंद्रमामेमनसिश्रितः ॥ मनोहृदये ॥ हृदयंमयि ॥ अहममृते ॥
अमृतंब्रह्मणि ॥ दिशोमेश्रोत्रेश्रिताः ॥ श्रोत्रꣳहृदये ॥ हृदयंमयि ॥
अहममृते ॥ अमृतंब्रह्मणि ॥ आपोमेरेतसिश्रिताः ॥ रेतोहृदये ॥ हृदयं
मयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ पृथिवीमेशरीरेश्रिता ॥ शरीरꣳ
हृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ ओषधिवनस्पतयोमे
लोमसुश्रिताः ॥ लोमानिहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्र
ह्मणि ॥ इंद्रोमेबलेश्रितः ॥ बलꣳहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतं
ब्रह्मणि ॥ पर्जन्योमेमूर्ध्निश्रितः ॥ मूर्धाहृदये ॥ हृदयंमयि ॥ अहममृते ॥
अमृतंब्रह्मणि ॥ ईशानोमेमन्यौश्रितः ॥ मन्युर्हृदये ॥ हृदयंमयि ॥

अहमस्मृतें ॥ अमृतंब्रह्मणि ॥ आत्मामेआत्मनिश्रितः ॥ आत्माहृदये ॥
हृदयंमयि ॥ अहमस्मृते ॥ अमृतंब्रह्मणि ॥ पुनर्मेआत्मापुनरायुरागात् ॥
पुनःप्राणःपुनराकूतमागात् ॥ वैश्वानरोरश्मिभिर्वावृधानः ॥ अंतस्ति
ष्ठत्वमृतस्यगोपाः ॥ १ ॥ त्वमग्नेरुद्रोअसुरोमहोदिवः ॥ त्वंशर्धोमा
रुतंपृक्षईशिषे ॥ त्वंवातैररुणैर्यासिशंगयः ॥ त्वंपूषाविधतःपासिनु
त्मना ॥ देवादेवेपुश्रयध्वं ॥ प्रथमाद्वितीयेपुश्रयध्वं ॥ द्वितीयास्तृती
येपुश्रयध्वं ॥ तृतीयाश्चतुर्थेपुश्रयध्वं ॥ चतुर्थाःपंचमेपुश्रयध्वं ॥ पंच
माःषष्ठेपुश्रयध्वं ॥ षष्ठाःसप्तमेपुश्रयध्वं ॥ सप्तमाअष्टमेपुश्रयध्वं ॥ अष्ट
मानवमेपुश्रयध्वं ॥ नवमादशमेपुश्रयध्वं ॥ दशमाएकादशेपुश्रयध्वं ॥
एकादशाद्वादशेपुश्रयध्वं ॥ द्वादशास्त्रयोदशेपुश्रयध्वं ॥ त्रयोदशाश्चतु
र्दशेपुश्रयध्वं ॥ चतुर्दशाःपंचदशेपुश्रयध्वं ॥ पंचदशाःषोडशेपुश्रयध्वं ॥

षोडशाःसप्तदशोषुश्रयध्वं ॥ सप्तदशाअष्टादशोषुश्रयध्वं ॥ अष्टादशा
एकान्नविꣳशोषुश्रयध्वं ॥ एकान्नविꣳशाविꣳशोषुश्रयध्वं ॥ विꣳ
शाएकविꣳशोषुश्रयध्वं ॥ एकविꣳशाद्वाविꣳशोषुश्रयध्वं ॥ द्वाविꣳ
शास्त्रयोविꣳशोषुश्रयध्वं॥त्रयोविꣳशाश्चतुर्विꣳशोषुश्रयध्वं॥चतुर्विꣳ
शाःपंचविꣳशोषुश्रयध्वं ॥ पंचविꣳशाःषड्विꣳशोषुश्रयध्वं ॥ षड्विꣳ
शाःसप्तविꣳशोषुश्रयध्वं ॥ सप्तविꣳशाअष्टाविꣳशोषुश्रयध्वं ॥ अष्टा
विꣳशाएकान्नत्रिꣳशोषुश्रयध्वं ॥ एकान्नत्रिꣳशास्त्रिꣳशोषुश्रयध्वं ॥
त्रिꣳशाएकत्रिꣳशोषुश्रयध्वं॥एकत्रिꣳशाद्वात्रिꣳशोषुश्रयध्वं॥द्वात्रिꣳ
शास्त्रयस्त्रिꣳशोषुश्रयध्वं ॥ देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिꣳशाः ॥ उत्तरे
भवत ॥ उत्तरवर्त्मानउत्तरसत्वानः ॥ यत्कामइदंजुहोमि ॥ तन्मेस
मृध्यतां ॥ वयꣳस्यामपतयोरयीणां ॥ भूर्भुवःस्वःस्वाहा ॥ १० ॥

चरणंपवित्रंविततंपुराणं ॥ येनपूतस्तरतिदुष्कृतानि ॥ तेनपवित्रेण
शुद्धेनपूताः ॥ अतिपाप्मानमरातिंतरेम ॥ लोकस्यद्वारमर्चिमत्पवित्रं ॥
ज्योतिष्मद्भ्राजमानंमहस्वत् ॥ अमृतस्यधाराबहुधादोहमानं ॥ चरणं
नोलोकेसुधितांदधातु ॥ अग्निर्मूर्धाभुवः ॥ अनुनोद्यानुमतिरन्विदनु
मतेत्वं ॥ हव्यवाहꣳस्विष्टं ॥ ११ ॥ ऋचांप्राचीमहतीदिगुच्यते ॥ साम्नामुदी
चीमहतीदिगुच्यते ॥ ऋग्भिःपूर्वाह्णेदिविदेवईयते ॥ यजुर्वेदेतिष्ठति
दक्षिणामाहुर्यजुषामपारां ॥ अथर्वणामंगिरसांप्रतीची ॥ साम्नामुदी
चीमहतीदिगुच्यते ॥ ऋग्भिःपूर्वाह्णेदिविदेवईयते ॥ यजुर्वेदेतिष्ठति
मध्येअह्नः ॥ सामवेदेनास्तमयेमहीयते ॥ वेदैरशून्यस्त्रिभिरेतिसूर्यः ॥
ऋग्भ्योजाताꣳसर्वशोमूर्तिमाहुः ॥ सर्वागतिर्याजुषीहैवशश्वत् ॥ ऋग्भ्यो
सर्वतेजःसामरूप्यꣳहशश्वत् ॥ सर्वꣳहेदंब्रह्मणाहैवसृष्टं ॥ सामवेदोब्राह्मणानां
जातंवैश्यंवर्णमाहुः ॥ यजुर्वेदंक्षत्रियस्याहुर्योनिं ॥ सामवेदोब्राह्मणानां

प्रसूतिः ॥ पूर्वेपूर्वेभ्योवचएतदूचुः ॥ आदुर्शमग्निंचिन्वानाः ॥ पूर्वे
विश्वसृजोमृताः ॥ शतंवर्षसहस्राणि ॥ दीक्षिताःसत्रमासत ॥ तपआसी
द्गृहपतिः ॥ ब्रह्मब्रह्माभवत्स्वयं ॥ सत्यꣳहहोतैषामासीत् ॥ यद्विश्व
सृजआसत ॥ अमृतमेभ्यउदगायत् ॥ सहस्रंपरिवत्सरान् ॥ भूतꣳह
प्रस्तोतैषामासीत् ॥ भविष्यत्प्रतिचाहरत् ॥ प्राणोअध्वर्युरभवत् ॥
इदꣳसर्वꣳसिषासतां ॥ अपानोविद्वानावृतः ॥ प्रतिप्रातिष्ठदध्वरे ॥
आर्तवाउपगातारः ॥ सदुस्याऋतवोभवन् ॥ अर्धमासाश्चमासाश्च ॥
चमसाध्वर्यवोभवन् ॥ अशꣳसद्ब्रह्मणस्तेजः ॥ अच्छावाकोभवद्यशः॥
ऋतमेषांप्रशास्तासीत् ॥ यद्विश्वसृजआसत ॥ ऊर्ग्राजानमुदवहत् ॥
ध्रुवगोपःसहोभवत् ॥ ओजोभ्यष्टौद्ग्रावृणः ॥ यद्विश्वसृजआसत ॥
अपचितिःपोत्रीयामयजत् ॥ नेष्ट्रीयामयजत्त्विषिः ॥ आग्नीध्राद्विदुषी

सत्यं ॥ श्रद्धाहैवायजत्स्वयं ॥ इरापत्नीविश्वसृजां ॥ आकूतिरपिन
द्धविः ॥ इध्मꣳहक्षुच्चैभ्यउग्रे ॥ तृष्णाचावहतामुभे ॥ वागेषाꣳसुब्र
ह्मण्यासीत् ॥ छंदोयोगान्विजानती ॥ कल्पतंत्राणितन्वानाहः ॥ सꣳ
स्थाश्चसर्वशः ॥ अहोरात्रेपशुपाल्यौ ॥ मुहूर्ताःप्रेष्याअभवन् ॥ मृत्यु
स्तदभवद्धाता ॥ शमितोग्रोविशांपतिः ॥ विश्वसृजःप्रथमाःसत्रमासत ॥
सहस्रसमंप्रसुतेनयंतः ॥ ततोहजज्ञेभुवनस्यगोपाः ॥ हिरण्मयःशकु
निर्ब्रह्मनाम ॥ येनसूर्यस्तपतितेजसेद्धः ॥ पितापुत्रेणपितृमान्योनि
योनौ ॥ नावेदविन्मनुतेतंबृहंतं ॥ सर्वानुभुमात्मानꣳसंपराये ॥ एष
नित्योमहिमाब्राह्मणस्य ॥ नकर्मणावर्धतेनोकनीयान् ॥ तस्यैवात्माप
दवित्तंविदित्वा ॥ नकर्मणालिप्यतेपापकेन ॥ पंचपंचाशतस्त्रिवृतःसं
वत्सराः ॥ पंचपंचाशतःपंचदशाः ॥ पंचपंचाशतःसप्तदशाः ॥ पंच

पंचाशतंएकविंꣳशाः ॥ विश्वसृजाꣳसहस्रसंवत्सरं ॥ एतेनवैविश्वसृ
जंइदंविश्वमसृजंत ॥ यद्विश्वमसृजंत ॥ तस्माद्विश्वसृजः ॥ विश्वमेनान
नुप्रजायते ॥ ब्रह्मणःसायुज्यꣳसलोकतांयंति ॥ एतासामेवदेवतानाꣳ
सायुज्यं ॥ सार्ष्टिताꣳसमानलोकतांयंति ॥ यएतदुपयंति ॥ येचैन
त्प्राहुः ॥ येभ्यश्चैनत्प्राहुः ॥ ११ ॥ इतिब्राह्मणतृतीयाष्टकसमाप्तः ॥

अथअरण(उपनिषत्)प्रारंभः ॥ पवित्रवंतःपरिवाजमासते ॥ पितैषां
प्रत्नोअभिरक्षतिव्रतं ॥ महःसमुद्रंवरुणस्तिरोदधे ॥ धीराइच्छेकुर्धरु
णेष्वारभं ॥ पवित्रंतेविततंब्रह्मणस्पते ॥ प्रभुर्गात्राणिपर्यैषिविश्वतः ॥
अतप्ततनूर्नतदामोअश्नुते ॥ शृतासइद्वहंतःस्तत्समाशत ॥ अथवा
योरेकादशपुरुषस्यैकादशस्त्रीकस्य ॥ प्रभ्राजमानानाꣳरुद्राणाꣳस्थाने
स्वतेजसाभानि ॥ व्यवदातानाꣳरुद्राणाꣳस्थानेस्वतेजसाभानि ॥

वासुकिवैद्युतानाꣳ रुद्राणाꣳ स्थानेस्वतेज॑साभा॒नि ॥ रजतानाꣳ रुद्राणा
ꣳ स्थानेस्वतेज॑साभा॒नि ॥ परुषाणाꣳ रुद्राणाꣳ स्थानेस्वतेज॑साभा॒नि ॥
श्यामानाꣳ रुद्राणाꣳ स्थानेस्वतेज॑साभा॒नि ॥ कपिलानाꣳ रुद्राणाꣳ स्थानेस्वतेज॑सा-
भा॒नि ॥ अतिलोहितानाꣳ रुद्राणाꣳ स्थानेस्वतेज॑साभा॒नि ॥ अवपतंतानाꣳ
रुद्राणाꣳ स्थानेस्वतेज॑साभा॒नि ॥ ऊर्ध्वानाꣳ रुद्राणाꣳ स्थानेस्वतेज॑सा
भा॒नि ॥ वैद्युतानाꣳ रुद्राणाꣳ स्थानेस्वतेज॑साभा॒नि ॥ न्यव
रुद्राणाꣳ स्थानेस्वतेज॑साभा॒नि ॥ प्रभ्राजमानीनाꣳ रुद्राणीनाꣳ स्थानेस्वतेज॑साभा॒नि ॥ वासुकिवैद्युतीनाꣳ रुद्रा
दातीनाꣳ रुद्राणीनाꣳ स्थानेस्वतेज॑साभा॒नि ॥ रजतानाꣳ रुद्राणीनाꣳ स्थानेस्वतेज॑साभा॒नि ॥ श्यामाना
पीनाꣳ स्थानेस्वतेज॑साभा॒नि ॥ परुषाणाꣳ रुद्राणीनाꣳ स्थानेस्वतेज॑साभा॒नि ॥ कपिलानाꣳ रुद्राणीनाꣳ स्थाने
ꣳ रुद्राणीनाꣳ स्थानेस्वतेज॑साभा॒नि

स्वतेजंसाभानि ॥ अतिलोहितीना९ंरुद्राणीना९ंस्थानेस्वतेजंसाभानि॥
ऊर्ध्वानां९ंरुद्राणीना९ंस्थानेस्वतेजंसाभानि ॥ अवपतंतीना९ंरुद्राणी
ना९ंस्थानेस्वतेजंसाभानि ॥ वैद्युतीना९ंरुद्राणीना९ंस्थानेस्वतेजंसा
भानि ॥ ॐभूर्भुवःस्वः ॥ रूपाणिवोमिथुनंमानोमिथुन९ंरीढ्वं ॥ १ ॥
अथाग्नेरष्टपुरुषस्य ॥ अग्नेःपूर्वदिश्यस्यस्थानेस्वतेजंसाभानि ॥ जातवे
दसउपदिश्यस्यस्थानेस्वतेजंसाभानि ॥ सहोजसोदक्षिणदिश्यस्यस्था
नेस्वतेजंसाभानि ॥ अजिराप्रभवउपदिश्यस्यस्थानेस्वतेजंसाभानि ॥
वैश्वानरस्यापरदिश्यस्यस्थानेस्वतेजंसाभानि ॥ नर्यापसउपदिश्यस्य
स्थानेस्वतेजंसाभानि ॥ पंक्तिराधसउदग्दिश्यस्यस्थानेस्वतेजंसाभानि ॥
विसर्पिणउपदिश्यस्यस्थानेस्वतेजंसाभानि ॥ ॐभूर्भुवःस्वः ॥ दि
शोवोमिथुनंमानोमिथुन९ंरीढ्वं ॥ योवैतांब्रह्मणोवेद ॥ अमृतेनावृ

तांपुरीं ॥ तस्मैब्रह्मचंब्रह्माच ॥ आयुःकीर्तिंप्रजांददुः ॥ उत्तिष्ठब्रह्म
णस्पते ॥ देवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवः ॥ इंद्रप्राशूर्भ
वासचा ॥ २ ॥ सहवैदेवानांचासुराणांच यज्ञौप्रततावास्तांवयꣳस्वर्गं
लोकमेष्यामोवयमेष्यामइतितेसुराःसंनह्यसहसैवाचरन्ब्रह्मचर्येणतपसै
वदेवास्तेसुराअमुह्यꣳस्तेनप्राजानꣳस्तेपराभवंतेनस्वर्गंलोकमायन्प्रसृ
तेनवैयज्ञेनदेवाःस्वर्गंलोकमायंन्नप्रसृतेनासुरान्पराभावयन्प्रसृतोहवैयज्ञो
पवीतिनोयज्ञोप्रसृतोनुपवीतिनोयत्किंचब्राह्मणोयज्ञोपवीत्यधीतेयजंत
एवतत्तस्माद्यज्ञोपवीत्येवाधीयीतयाजयेद्यजेतवायज्ञस्यप्रसृत्याअजिनं
वासोवादक्षिणतउपवीयदक्षिणंबाहुमुद्धरतेवधत्तेसव्यमितियज्ञोपवीत
मेतदेवविपरीतंप्राचीनावीतꣳसंवीतंमानुषं ॥ ३ ॥ यद्देवादेवहेळनंदेवा
सश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचततस्यर्तेनमामित ॥ देवाजी

वनकाम्यायद्वाचानृतमूदिम ॥ तस्मान्नइहमुंचतविश्वेदेवाःसजोषसः ॥
ऋतेनद्यावापृथिवीऋतेनत्वꣳसरस्वति ॥ कृतान्नःपाह्येनसोयत्किंचानृ
तमूदिम ॥ इंद्राग्नीमित्रावरुणौसोमोधाताबृहस्पतिः ॥ तेनोमुंचंत्वेनसो
यदन्यकृतमारिम ॥ सजातशꣳसादुतजामिशꣳसाज्ज्यायसःशꣳसादुत
वाकनीयसः ॥ अनाधृष्टंदेवकृतंयदेनस्तस्मात्त्वमस्मान्जातवेदोमुमुग्धि ॥
यद्वाचायन्मनसाबाहुभ्यामूरुभ्यामष्ठीवद्भ्याꣳशिश्नैर्यदनृतंचकृमावयं ॥
अग्निर्मातस्मादेनसःप्रमुंचतुचकृमयानिदुष्कृता ॥ येनत्रितोअर्णवान्निर्ब
भूवयेनसूर्यंतमसोनिर्मुमोच ॥ येनेंद्रोविश्वाअजहादरातीस्तेनाहंज्योतिषा
ज्योतिरानशानआक्षि ॥ यत्कुसीदमप्रतीत्तंमयेहयेनयमस्यनिधिनाचरा
मि ॥ एतत्तदग्नेअनृणोभवामिजीवन्नेवप्रतितत्तेदधामि ॥ यन्मायिमाताय
दापिपेषयदंतरिक्षंयदाशसातिक्रामामित्रितेदेवादिविजातायदापइमंमेव

रुणतत्त्वांयामित्वंनोअग्नेसत्वंनोअग्नेत्वमग्नेअयासि ॥ ४ ॥ यददीव्यंनृ
णमहंबभूवादित्सन्वासंजगरजनेभ्यः ॥ अग्निर्मातस्मादिंद्रश्चसंविदानो
प्रमुंचतां ॥ यद्धस्ताभ्यांचकरकिल्बिषाण्यक्षाणांवग्नुमुपजिघ्नमानः ॥
उग्रंपश्याचराष्ट्रभृच्चतान्यप्सरसावनुदत्तामृणानि ॥ उग्रंपश्येराष्ट्रभृत्कि
ल्बिषाणियदक्षवृत्तमनुदत्तमेतत् ॥ नेन्नंऋणानृणवइत्समानोयमस्यलो
केअधिरज्जुराय ॥ अवतेहेळउदुत्तममिमंमेवरुणतत्त्वांयामित्वंनोअग्नेस
त्वंनोअग्ने ॥ संकुसुकोविकुसुकोनिर्ऋथोयश्चनिस्वनः ॥ तेयेस्मद्यक्ष्म
मनागसोदूराद्दूरमचीचतं ॥ निर्यक्ष्ममचीचतकृत्यांनिर्ऋतिंच ॥ तेन
योऽस्मत्समृच्छातेतमस्मैप्रसुवामसि ॥ दुःशंसानुशंसाभ्यांघणेना
नुघणेनच ॥ तेनान्योऽस्मत्समृच्छातैतमस्मैप्रसुवामसि ॥ संवर्चसा
पयसासंतनूभिरगन्महिमनसासंशिवेन ॥ त्वष्टानोअत्रविदधातुरायो

नुमार्द्धृतन्वोरयद्विलिष्टं ॥ ६ ॥ आयुष्टेविश्वतोदधदयमग्निर्वरेण्यः ॥
पुनस्तेप्राणआयातिपरायक्ष्मꣳसुवामिते ॥ आयुर्दाअग्नेहविषोजुषाणो
घृतप्रतीकोघृतयोनिरेधि ॥ घृतंपीत्वामधुचारुगव्यंपितेवपुत्रमभिरक्ष
तादिमं ॥ इममग्नआयुषेवर्चसेकृधितिग्ममोजोवरुणसꣳशिशाधि ॥
मातेवास्माअदितेशर्मयच्छविश्वेदेवाजरदष्टिर्यथासत् ॥ अग्नआयूꣳषि
पवसआसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनां ॥ अग्नेपवस्वस्वपाअ
स्मेवर्चःसुवीर्यं ॥ दधद्रयिंमयिपोषं ॥ अग्निर्ऋषिःपवमानःपाञ्चजन्यः
पुरोहितः ॥ तमीमहेमहागयं ॥ अग्नेजातान्प्रणुदानःसपत्नान्प्रत्यजा
तान्जातवेदोनुदस्व ॥ अस्मेदीदिहिसुमनाअहेळन्छर्मंतेस्यामत्रिवरूथउ
द्भौ ॥ सहसाजातान्प्रणुदानःसपत्नान्प्रत्यजातान्जातवेदोनुदस्व ॥ अधि
नोब्रूहिसुमनस्यमानोवयꣳस्यामप्रणुदानःसपत्नान् ॥ अग्नेयोनोभितोज

नोवृकोवारोजिघाँसति ॥ ताँस्त्वंवृत्रहन्जहिवस्वस्मभ्यमाभर ॥ अग्ने
योनोभिदासतिसमानोयश्चनिष्ट्यः ॥ तंवयँसमिधंकृत्वातुभ्यमग्नेपिंद
ध्मसि ॥ योनःशपादशपतोयश्चनःशपतःशपात् ॥ उपाश्वतस्सैनिम्रु
क्चसर्वैपापँसमूहतां ॥ योनःसपत्नोयोरणोमर्तोभिदासतिदेवाः ॥
इध्मस्येवप्रक्षायतोमातस्योच्छेषिकिंचन ॥ योमांद्वेष्टिजातवेदोयंचाहंद्वे
ष्मियश्चमां ॥ सर्वाँस्तानग्नेसंदहयाँश्चाहंद्वेष्मियेचमां ॥ योअस्म
भ्यमरातीयाद्यश्चनोद्वेषतेजनः ॥ निंदाद्योअस्मान्दिप्साच्चसर्वाँस्तान्म
ष्मषाकुरु ॥ सँशितंमेब्रह्मसँशितंवीर्यां३वलं ॥ सँशितंक्षत्रंमेजि
ष्णुयस्याहमस्मिपुरोहितः ॥ उदेषांबाहूअतिरमुद्वर्चोअथोवलं ॥ क्षिणो
मिब्रह्मणामित्रानुन्नयामिस्वाँ२अहं ॥ पुनर्मैनःपुनरायुर्मआगात्पुनश्च
क्षुःपुनःश्रोत्रंमआगात्पुनःप्राणःपुनराकूतंमआगात्पुनश्चित्तंपुनराधीतं

मआगात् ॥ वैश्वानरोमेदंऽधस्तनूपाअवबाधतांदुरितानिविश्वा ॥ ६ ॥
वैश्वानरायप्रतिवेदयामोयदीनृणꣳसंगरोदेवतासु ॥ सएतान्पाशान्प्र
मुचन्प्रवेदसनोमुंचातुदुरितादवद्यात् ॥ वैश्वानरःपवयान्नःपवित्रैर्यत्संग
रमभिधावाम्याशां ॥ अनाजानन्मनसायाचमानोयदत्रैनोअवतत्सुवा
मि ॥ अमीयेसुभगेदिविविचृतौनामतारके ॥ प्रेहामृतस्ययच्छतामेतद्ब
द्धकमोचनं ॥ विजिहीर्ष्वलोकान्कृधिबंधान्मुंचासिबद्धकं ॥ योनेरि
वप्रच्युतोगर्भःसर्वान्पथोअनुष्व ॥ सप्रजानन्प्रतिगृभ्णीतविद्वान्प्रजा
पतिःप्रथमजाऋतस्य ॥ अस्माभिर्दत्तंजरसःपरस्तादच्छिन्नंतंतुमनुसंच
रेम ॥ ततंतंतुमन्वेकेअनुसंचरंतियेषांदत्तंपित्र्यमायनवत् ॥ अबंध्वे
केददतःप्रयच्छादातुंचेच्छक्नुवाꣳसःस्वर्गएषां ॥ आरंभेथामनुसꣳरभे
थाꣳसमानंपंथामवथोघृतेन ॥ यद्वांपूर्तंपरिविष्टंयदग्नौतस्मैगोत्रायेह

जायापतीसꣳरभेथां ॥ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहि
ꣳसिम ॥ अग्निर्मातस्मादेनसोगार्हपत्यउन्नोनेषद्दुरितायानिचकृम ॥
भूमिर्मातादितिर्नोजनित्रंभ्रातांतरिक्षमभिशस्तएनः ॥ द्यौर्नःपितापितृ
याच्छंभवासिजामिमित्वामाविविवित्सिलोकात् ॥ यत्रसुहार्दःसुकृतोमदं
तेविहायरोगंतन्वा२ꣳस्वायां ॥ अश्लोणांगैरहुताःस्वर्गेतत्रपश्येमपि
तरंचपुत्रं ॥ यदन्नमद्म्यनृतेनदेवादास्यन्नदास्यन्नुतवाकरिष्यन् ॥ यद्देवा
नांचक्षुष्यागोअस्तियदेवकिंचप्रतिजग्राहमग्निर्मातस्मादनृणंकृणोतु ॥
यदन्नमग्निर्बहुधाविरूपंवासोहिरण्यमुतगामजामविं ॥ यद्देवानांचक्षु
ष्यागोअस्तियदेवकिंचप्रतिजग्राहमग्निर्मातस्मादनृणंकृणोतु ॥ यन्मया
मनसावाचाकृतमेनःकदाचन ॥ सर्वस्मात्तस्मान्मेळितोमोग्धित्वꣳहि
वेत्थयथातथं ॥ ७ ॥ कूष्माण्डैर्जुहुयाद्योपूतइवमन्येतयथास्तेनोयथाभ्रू

णहैवमेषभवतियोयोनौरेतःसिंचतियदर्वाचीनमेनोभ्रूणहत्यायास्तस्मा
न्मुच्यतेयावदेनोदीक्षामुपैतिदीक्षितएतैःसंततिजुहोतिसंवत्सरंदीक्षि
तोभवतिसंवत्सरादेवात्मानंपुनीतेमासंदीक्षितोभवतियोमासःससंवत्स
रःसंवत्सरादेवात्मानंपुनीतेचतुर्विँशतिँरात्रीर्दीक्षितोभवतिचतुर्विं
ँशतिरर्धमासाःसंवत्सरःसंवत्सरादेवात्मानंपुनीतेद्वादशरात्रीर्दीक्षितो
भवतिद्वादशमासाःसंवत्सरःसंवत्सरादेवात्मानंपुनीतेषड्रात्रीर्दीक्षितोभ
वतिषड्वाऋतवःसंवत्सरःसंवत्सरादेवात्मानंपुनीतेतिस्रोरात्रीर्दीक्षितोभ
त्रिपदागायत्रीगायत्रियाएवात्मानंपुनीतेनमाँसमश्नीयान्नस्त्रियमु
पेयान्नोपर्यासीतजुगुप्सेतानृतात्पयोब्राह्मणस्यव्रतंयवागूराजन्यस्यामि
क्षावैश्यस्याथोसौम्येप्यध्वरएतद्व्रतंब्रूयाद्यदिमन्येतोपदस्यामीत्योदनंधा
नाःसक्तून्घृतमित्यनुव्रतयेदात्मनोनुपदासाय ॥ ८ ॥ यावतीर्वैदेवता

स्ताःसर्वावेदविदिंब्राह्मणेवसंतितस्माद्ब्राह्मणेभ्योवेदविद्भ्योदिवेदिवेनम
स्कुर्यान्नाश्लीलंकीर्तयेदेताएवदेवताःप्रीणाति ॥ चित्तिःस्रुक् ॥ चित्त
माज्यं ॥ वाग्वेदिः ॥ आधीतंबर्हिः ॥ केतोअग्निः ॥ विज्ञातमग्निः ॥
वाक्पतिर्होता ॥ मनउपवक्ता ॥ प्राणोहविः ॥ सामाध्वर्युः ॥ वाच
स्पतेविधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्प
तिःसोमंपिबतु ॥ आस्मासुनृम्णंधात्स्वाहा ॥ ९ ॥ पृथिवीहोता ॥
द्यौरध्वर्युः ॥ रुद्रोग्नीत् ॥ बृहस्पतिरुपवक्ता ॥ वाचस्पतेवाचोवीर्येण ॥
संभृततमेनायक्ष्यसे ॥ यजमानायवार्यं ॥ आसुवस्करस्मै ॥ वाचस्प
तिःसोमंपिबति ॥ जजनदिंद्रमिंद्रियायस्वाहा ॥ १० ॥ अग्निर्होता ॥
अश्विनाध्वर्यू ॥ त्वष्टाग्नीत् ॥ मित्रउपवक्ता ॥ सोमःसोमस्यपुरोगाः ॥
शुक्रःशुक्रस्यपुरोगाः ॥ श्रातास्तइंद्रसोमाः ॥ वातापेर्हवनश्रुतःस्वाहा

॥ ११ ॥ सूर्यंतेचक्षुः ॥ वातंप्राणः ॥ द्यांपृष्ठं ॥ अंतरिक्षमात्मा ॥
अंगैर्यज्ञं ॥ पृथिवीꣳशरीरैः ॥ वाचस्पतेच्छिद्रयावाचा ॥ अच्छिद्रया
जुह्वा ॥ दिविदेवावृधꣳहोत्रामेरयस्वस्वाहा ॥ १२ ॥ महाहविर्होता ॥
सत्यहविरध्वर्युः ॥ अच्युतपाजाअग्नीत् ॥ अच्युतमनाउपवक्ता ॥
अनाधृष्यश्चाप्रतिधृष्यश्चयज्ञस्याभिगरौ ॥ अयास्यउद्गाता ॥ वाच
स्पतेहृद्विधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्प
तिःसोमंमपात् ॥ मादैव्यस्तंतुश्छेदिमामनुष्यः ॥ नमोदिवे ॥ नमः
पृथिव्यैस्वाहा ॥ १३ ॥ वाग्घोता ॥ दीक्षापत्नी ॥ वातोध्वर्युः ॥ आपो
भिगरः ॥ मनोहविः ॥ तपसिजुहोमि ॥ भूर्भुवःसुवः ॥ ब्रह्मस्वयंभु ॥
ब्रह्मणेस्वयंभुवेस्वाहा ॥ १४ ॥ ब्राह्मणएकहोता ॥ सयज्ञः ॥ समेद
दातुप्रजांपशून्पुष्टिंयशः ॥ यज्ञश्चमेभूयात् ॥ अग्निर्द्विहोता ॥ सभर्ता ॥

समेददातुप्रजांपशून्पुष्टिंयशः ॥ भर्ताचमेभूयात् ॥ पृथिवीत्रिहोता ॥
सप्रतिष्ठा ॥ समेददातु० ॥ प्रतिष्ठाचमेभूयात् ॥ अंतरिक्षंचतुर्होता ॥
सविष्ठाः ॥ समेददातु० ॥ विष्ठाश्चमेभूयात् ॥ वायुःपंचहोता ॥
सप्राणः ॥ समेददातु० ॥ प्राणश्चमेभूयात् ॥ चंद्रमाःषड्ढोता ॥ सऋ
तूंन्कल्पयाति ॥ समेददातु० ॥ ऋतवश्चमेकल्पंतां ॥ अन्नꣳसप्तहो
ता ॥ सप्राणस्यप्राणः ॥ समेददातु० ॥ प्राणस्यचमेप्राणोभूयात् ॥
द्यौरष्टहोता ॥ सोनाधृष्यः ॥ समेददातु० ॥ अनाधृष्यश्चभूयासं ॥
आदित्योनवहोता ॥ सतेजस्वी ॥ समेददातु० ॥ तेजस्वीचभूयासं ॥
प्रजापतिर्दशहोता ॥ सइदꣳसर्वं ॥ समेददातु० ॥ सर्वंचमेभूयात्
॥ १५ ॥ अग्निर्यजुर्भिः ॥ सवितास्तोमैः ॥ इंद्रउक्थामदैः ॥ मित्रावरु
णावाशिषां ॥ अंगिरसोधिष्णियैरग्निभिः ॥ मरुतःसदोहविर्धानाभ्यां ॥

आपः॒प्रोक्ष॑णीभिः ॥ ओष॑धयोब॒र्हिषा॑ ॥ आदि॑ति॒र्वेद्या॑ ॥ सोमो॑द्दी
क्षया॑ ॥ त्वष्टे॒ध्मेन॑ ॥ विष्णु॑र्य॒ज्ञेन॑ ॥ वस॑व॒आज्येन ॥ आ॒दि॒त्यादक्षि
णाभिः ॥ विश्वेदे॒वाऊ॒र्जा ॥ पू॒षास्व॑गाका॒रेण॑ ॥ बृह॒स्पतिः॒पु॒रोध॑या ॥
प्र॒जाप॑तिरु॒द्गीथेन॑ ॥ अं॒तरि॑क्षंप॒वित्रे॑ण ॥ वा॒युः॒पात्रैः ॥ अह॑ꣳश्र॒द्धया॑
॥ १६ ॥ सेनेंद्र॑स्य ॥ धेना॒बृह॒स्पतेः ॥ प॒थ्या॑पू॒ष्णः ॥ वाग्वा॒योः ॥
दी॒क्षासोम॑स्य ॥ पृ॒थि॒व्य॑ग्नेः ॥ वसू॑नांगा॒यत्री ॥ रु॒द्राणां॑त्रि॒ष्टुप् ॥ आ॒दि
त्या॒नांजग॑ती ॥ विष्णो॑रनु॒ष्टुप् ॥ वरु॑णस्यवि॒राट् ॥ य॒ज्ञस्य॑पं॒क्तिः ॥ प्र॒जाप
ते॒रनु॑मतिः ॥ मि॒त्रस्य॑श्र॒द्धा ॥ स॒वि॒तुः॒प्रसू॑तिः ॥ सूर्य॑स्य॒मरी॑चिः ॥ चं॒द्रम॑सो
रोहि॒णी ॥ ऋषी॑णामरुं॒धती ॥ प॒र्जन्य॑स्यवि॒द्युत् ॥ चत॑स्रो॒दिशः ॥ चत॑स्रो
वांतरदि॒शाः ॥ अह॑श्च॒रात्रि॑श्च ॥ कृ॒षिश्च॒वृष्टि॑श्च ॥ त्विषि॒श्चाप॑चितिश्च ॥
आप॒श्चौष॑धयश्च ॥ ऊर्क्च॑सू॒नृता॑चदे॒वानां॒पत्न॑यः ॥ १७ ॥ दे॒वस्य॑त्वा

सवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांप्रतिगृह्णामिराजात्वावरुणो
नयतुदेविदक्षिणेग्नयेहिरण्यंतेनामृतत्वमश्यांवयोदात्रेमयोमह्यमस्तुप्र
तिग्रहीत्रेकइदंकस्माअदात्कामःकामायकामोदाताकामःप्रतिग्रहीताका
मंसमुद्रमाविशकामेनत्वाप्रतिगृह्णामिकामैतत्तेएषातेकामदक्षिणोत्ता
नस्त्वांगीरसःप्रतिगृह्णातु ॥ १८ ॥ सुवर्णंघर्मंपरिवेदवेनं ॥ इंद्रस्यात्मा
नंदशधाचरंतं ॥ अंतःसमुद्रेमनसाचरंतं ॥ ब्रह्मान्वविंदद्दशहोतारमर्णे ॥
अंतःप्रविष्टःशास्ताजनानां ॥ एकःसन्बहुधाविचारः ॥ शतंशुक्रा
णियत्रैकंभवंति ॥ सर्वेवेदायत्रैकंभवंति ॥ सर्वेहोतारोयत्रैकंभवंति ॥
समानंसीनआत्माजनानां ॥ अंतःप्रविष्टःशास्ताजनानांसर्वात्मा ॥
सर्वाःप्रजायत्रैकंभवंति ॥ चतुर्होतारोयत्रसंपदंगच्छंतिदेवैः ॥ समा
नंसीनआत्माजनानां ॥ ब्रह्मेंद्रमग्निंजगतःप्रतिष्ठां ॥ दिवआत्मानंस

वितारंबृहस्पतिं ॥ चतुर्होतारंप्रदिशोनुक्लृप्तं ॥ वाचोवीर्यंतपसान्वविं
दत् ॥ अंतःप्रविष्टंकर्तारमेतं ॥ त्वष्टारꣳरूपाणिविकुर्वंतंविपश्चिं ॥ अ
मृतस्यप्राणंयज्ञमेतं ॥ चतुर्होतॄणामात्मानंकवयोनिचिक्युः ॥ अंतःप्र
विष्टंकर्तारमेतं ॥ देवानांबंधुनिहितंगुहासु ॥ अमृतेनक्लृप्तंयज्ञमेतं ॥ चतु
र्होतॄणामात्मानंकवयोनिचिक्युः ॥ शतंनियुतःपरिवेदविश्वाविश्ववारः ॥
विश्वमिदंवृणाति ॥ इंद्रस्यात्मानिहितःपंचहोता ॥ अमृतंदेवानामायुः
प्रजानां ॥ इंद्रꣳराजानꣳसवितारमेतं ॥ वायोरात्मानंकवयोनिचिक्युः ॥
रश्मिꣳरश्मीनांमध्येतपंतं ॥ ऋतस्यपदेकवयोनिपांति ॥ यआंडकोशे
भुवनंबिभर्ति ॥ अनिर्भिण्णःसन्नथलोकान्विचष्टे ॥ यस्यांडकोशꣳशु
ष्ममाहुःप्राणमुल्बं ॥ तेनक्लृप्तोमृतेनाहमस्मि ॥ सुवर्णकोशꣳरजसाप
रीवृतं ॥ देवानांवसुधानींविराजं ॥ १९ ॥ अमृतस्यपूर्णांतामुकलांविच

क्षते ॥ पाद॒ꣳ॒पद्धो॑तु॒र्नकि॑लाविवित्से ॥ ये॒न॒र्त॒वः॑पं॒च॒धोत॒कॢ॒प्ताः ॥ उ॒त
वा॑षट्॒धाम॒न॒सोत॒कॢ॒प्ताः ॥ तꣳ॒पद्धो॑तार॒मृ॒तु॒भि॒ः॑कल्प॑मानं ॥ ऋ॒तस्य॒प॒दे
क॒व॒यो॒निपा॑न्ति ॥ अं॒तः॒प्रवि॑ष्टं॒क॒र्ता॑र॒मे॒तं ॥ अं॒तश्चं॒द्र॒म॑सि॒मन॑सा॒चरं॑तं ॥
स॒है॒वसं॒तं॒नविजा॑नं॒ति॒दे॒वाः ॥ इं॒द्रस्या॒त्मानꣳ॒श॒त॒धाचरं॑तं ॥ इं॒द्रो॒रा॒जा
जग॑तो॒यई॒शे ॥ स॒प्तहो॑तास॒प्त॒धावि॑कॢ॒प्तः ॥ परे॑ण॒तं॒तुंप॑रि॒षि॒च्यमा॑नं ॥
अं॒तरा॑दि॒त्येमन॑सा॒चरं॑तं ॥ दे॒वा॒ना॒ꣳ॒हृ॒द॒यं॒ब्रह्मा॒न्व॑विंदत् ॥ ब्रह्मै॒तत्ब्रह्म
ण॒उज्ज॑भार ॥ अ॒र्कꣳ॒श्चो॑तंतꣳ॒स॒रि॒रस्य॒म॑ध्ये ॥ आ॒यस्मि॑न्त्स॒प्तपे॑रवः ॥
मेहं॑तिब॒हु॒लाꣳ॒श्रियं॑ ॥ अ॒च्युतां॑ब॒हु॒लाꣳ॒श्रियं॑ ॥ ब॒ह्व॒श्वामिं॑द्र॒गो॑मतीं ॥ अ॒च्यु
तां॑ब॒हु॒लाꣳ॒श्रियं॑ ॥ ब॒ह्व॒श्वामिं॑द्र॒गो॑मतीं ॥ ब॒ह्व॒श्वामिं॑द्र॒गो॑मतीं ॥ अ॒च्यु
स॒ह॒रिर्व॑सु॒वित्त॑मः ॥ पे॒रुरिं॒द्राय॑पिन्वते ॥ श॒तꣳ॒श॒ता॒अ॑स्य॒यु॒क्ता॒हरी॑णां ॥
तां॑ब॒हु॒लाꣳ॒श्रियं॑ ॥ म॒ह्यमिं॒द्रो॒निय॑च्छतु ॥ प्र॒मꣳ॒हं॑मा॒णो॒ब॒हु॒लाꣳ॒श्रियं॑ ॥ र॒श्मिरिं॒द्रः
अ॒र्वाङा॒या॒तु॒व॑सु॒भी॒र॒श्मिरिं॒द्रः ॥

सवितामोनियच्छतु ॥ घृतंतेजोमधुमदिंद्रियं ॥ मय्ययमग्निर्दधातु ॥ हरिः
पतंगःपटरीसुपर्णः ॥ दिविक्षयोनभसायएति ॥ सनइंद्रःकामवरंददातु ॥
पंचारंचक्रंपरिवर्ततेपृथु ॥ हिरण्यज्योतिःसरिरस्यमध्ये ॥ अजस्रंज्योति
र्नभसासर्पदेति ॥ सनइंद्रःकामवरंददातु ॥ सप्तयुंजंतिरथमेकचक्रं
॥ २० ॥ एकोअश्वोवहतिसप्तनामा ॥ त्रिनाभिचक्रमजरमनर्वं ॥ येनेमा
विश्वाभुवनानितस्थुः ॥ भद्रंपश्यंतउपसेदुरग्रे ॥ तपोदीक्षामृषयःसुवर्वि
दः ॥ ततःक्षत्रंबलमोजश्चजातं ॥ तदस्मैदेवाअभिसंनमंतु ॥ श्वेतंरश्मिं
बोभुज्यमानं ॥ अपांनेतारंभुवनस्यगोपां ॥ इंद्रंनिचिक्युःपरमेव्योमन् ॥
रोहिणीःपिंगलाएकरूपाः ॥ क्षरंतीःपिंगलाएकरूपाः ॥ शतंसहस्रा
णिप्रयुतानिनाव्यानां ॥ अयंयःश्वेतोरश्मिः ॥ परिसर्वमिदंजगत् ॥
प्रजांपशून्धनानि ॥ अस्माकंददातु ॥ श्वेतोरश्मिःपरिसर्वंबभूव ॥ सुव

वोविश्वरूपाः ॥ विरूपाःसंतोबहुधैकरूपाः ॥ तेषाᳬंसप्तानामिहरंति
रस्तु ॥ रायस्पोषायसुप्रजास्त्वायसुवीर्याय ॥ २१ ॥ अद्भ्यःसंभूतः
पृथिव्यैरसाच्च ॥ विश्वकर्मणःसमवर्तताधि ॥ तस्यत्वष्टाविदधद्रूपमे
ति ॥ तत्पुरुषस्यविश्वमाजानमग्रे ॥ वेदाहमेतंपुरुषंमहांतं ॥ आदित्य
वर्णंतमसःपरस्तात् ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यःपंथाविद्यते
यनाय ॥ प्रजापतिश्चरतिगर्भेअंतः ॥ अजायमानोबहुधाविजायते ॥
तस्यधीराःपरिजानंतियोनिं ॥ मरीचीनांपदमिच्छंतिवेधसः ॥ योदेवे
भ्यआतपति ॥ योदेवानांपुरोहितः ॥ पूर्वोयोदेवेभ्योजातः ॥ नमोरु
चायब्राह्मये ॥ रुचंब्राह्मंजनयंतः ॥ देवाअग्रेतदब्रुवन् ॥ यस्त्वैवंब्राह्म
णोविद्यात् ॥ तस्यदेवाअसन्वशे ॥ ह्रीश्चतेलक्ष्मीश्चपत्न्यौ ॥ अहोरात्रे
पार्श्वे ॥ नक्षत्राणिरूपं ॥ अश्विनौव्यात्तं ॥ इष्टंमनिषाण ॥ अमुंमनि

षाण ॥ सर्वैमनिषाण ॥ २२ ॥ अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयं
जतंविश्वरूपं ॥ अर्हन्निदंदयसेविश्वमभ्भुवंनवाओजीयोरुद्रत्वदस्ति ॥
यस्तेस्तनःशशयोयोमयोभूर्येनविश्वापुष्यसिवार्याणि ॥ योरत्नधावसुवि
द्यःसुदत्रःसरस्वतितमिहधातवेकः ॥ पृथिवीसमित् ॥ तामग्निःसमिंधे ॥
साग्निँसमिंधे ॥ तामहँसमिंधे ॥ सामासमिन्द्धा ॥ आयुषातेजसा ॥
वर्चसाश्रिया ॥ यशसाब्रह्मवर्चसेन ॥ अन्नाद्येनसमिंताँस्वाहा ॥
अंतरिक्षँसमित् ॥ तांवायुःसमिंधे ॥ सावायुँसमिंधे ॥ तामहँ
समिंधे ॥ सामासमिन्द्धा ॥ आयुषातेजसा ॥ वर्चसाश्रिया ॥ यशसा
ब्रह्मवर्चसेन ॥ अन्नाद्येनसमिंताँस्वाहा ॥ द्यौःसमित् ॥ तामादि
त्यःसमिंधे ॥ सादित्यँसमिंधे ॥ तामहँसमिंधे ॥ सामासमिन्द्धा ॥
आयुषातेजसा ॥ वर्चसाश्रिया ॥ यशसाब्रह्मवर्चसेन ॥ अन्नाद्येनस

मिंताऽस्वाहा ॥ प्राजापत्यामेंसमिदंसिसपत्नक्षयंणी ॥ भ्रातृव्यहामें
सिस्वाहा ॥ २३ ॥ इदंतएकंपरऊंतएकंतृतीयेंनज्योतिंषासंविंशस्व ॥
संवेशंनस्तनुवैचारुरेधिप्रियोदेवानांपरमेसधस्थे ॥ धातापुंनातुसवि
तापुंनातु ॥ अग्नेस्तेजसासूर्यस्यवर्चसा ॥ यंतेंअग्निममंथामवृषभाये
वपक्तवे ॥ इमंतऽशंमयामसिक्षीरेणंचोदकेनंच ॥ यंत्वमंग्नेसमदंह
स्त्वमुनिर्वापयापुनः ॥ क्यांबूरत्रंजायतांपाकदूर्वाव्यल्कशा ॥ शीतिं
केशीतिंकावतिह्लादुकेह्लादुकावति ॥ मंडूक्यांसुसंगमयेमऽस्वंग्निऽश
मयं ॥ शंतेंधन्वन्याआपःशमुंतेसंत्वनूक्याः ॥ शंतेंसमुद्रियाआपःश
मुंतेसंतुवर्ष्याः ॥ शंतेस्रवंतीस्तनुवेशमुंतेसंतुकूप्याः ॥ शंतेंनीहारो
वर्षतुशमुपृष्वावंशीयतां ॥ अवंसृजपुनरग्नेपितृभ्योयस्तआहुंतश्चरंति
स्वधाभिः ॥ आयुर्वसानउपयातुशेषऽसंगच्छतांतनुवांजातवेदः ॥

सुफलासंसि ॥ इमंजीवेभ्यःपरिधिंदधामिमानोनुगादपरोअर्धमेतं ॥
शतंजीवंतुशरदःपुरूचीस्तिरोमृत्युंदध्महेपर्वतेन ॥ इमानारीरविधवाःसु
पत्नीरांजनेनसर्पिषासंमृशंतां ॥ अनश्रवोअनमीवाःसुशेवाआरोहंतुज
नयोयोनिमग्ने ॥ २५ ॥ अपनःशोशुचदघमग्नेशुशुध्यारयिं ॥ अपनः
शोशुचदघं ॥ सुक्षेत्रियासुगातुयावसूयाचयजामहे ॥ अपनःशोशुच
दघं ॥ प्रयद्भंदिष्ठएषांप्रास्माकासश्चसूरयः ॥ अपनःशोशुचदघं ॥
प्रयदग्नेःसहस्वतोविश्वतोयंतिसूरयः ॥ अपनःशोशुचदघं ॥ प्रयत्तेअ
ग्नेसूरयोजायेमहिप्रतेवयं ॥ अपनःशोशुचदघं ॥ त्वꣳहिविश्वतोमुख
विश्वतःपरिभूरसि ॥ अपनःशोशुचदघं ॥ द्विषोनोविश्वतोमुखातिना
वेवपारय ॥ अपनःशोशुचदघं ॥ सनःसिंधुमिवनावयातिपर्षास्वस्तये ॥
अपनःशोशुचदघं ॥ आपःप्रवणादिवयतीरपास्मत्स्यंदतामघं ॥ अप

नःशोशुचदघं ॥ उद्वनादुदकानीवापास्मत्स्वंदतामघं ॥ अपन्नःशोशु
चदघं ॥ आनंदायप्रमोदायपुनरागाꣳस्वान्गृहान् ॥ अपन्नःशोशुचदघं ॥
नैवतत्रप्रमीयतेगौरश्वःपुरुषःपशुः ॥ यत्रेदंब्रह्मक्रियतेपरिधिर्जीवनाय
कमपन्नःशोशुचदघं ॥ गौर्धेनुर्भव्या ॥ मातारुद्राणांदुहितावसूनाꣳस्व
सादित्यानाममृतस्यनाभिः ॥ प्रणुवोचंचिकितुषेजनायमागामनागामदि
तिंवधिष्ट ॥ पिबतूदकंतृणान्यत्तु ॥ ओमुत्सृजत ॥ कुर्वाणाचीरमा
त्मनः ॥ वासाꣳसिममगावश्च ॥ अन्नपानेचसर्वदा ॥ ततोमेश्रियमा
वह ॥ मातृदेवोभव ॥ पितृदेवोभव ॥ आचार्यदेवोभव ॥ अतिथिदेवो
भव ॥ २६ ॥ भीषास्माद्वातःपवते ॥ भीषोदेतिसूर्यः ॥ भीषास्मादग्नि
श्चेंद्रश्च ॥ मृत्युर्धावतिपंचमइति ॥ सैषानंदस्यमीमाꣳसाभवति ॥ यु
वास्यात्साधुयुवाध्यायकः ॥ आशिष्ठोदृढिष्ठोबलिष्ठः ॥ तस्येयंपृथिवी

सर्वावित्तस्यपूर्णास्यात् ॥ सएकोमानुषआनंदः ॥ तेयेशतंमानुषाआ
नंदाः ॥ सएकोमनुष्यगंधर्वाणामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥
तेयेशतंमनुष्यगंधर्वाणामानंदाः ॥ सएकोदेवगंधर्वाणामानंदः ॥ श्रोत्रि
यस्यचाकामहतस्य ॥ तेयेशतंदेवगंधर्वाणामानंदाः ॥ सएकःपितृणां
चिरलोकलोकानामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंपितृ
णांचिरलोकलोकानामानंदाः ॥ सएकआजानजानांदेवानामानंदः ॥
श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतमाजानजानांदेवानामानंदाः ॥ स
एकःकर्मदेवानांदेवानामानंदः ॥ येकर्मणादेवानपियंति ॥ श्रोत्रिय
स्यचाकामहतस्य ॥ तेयेशतंकर्मदेवानांदेवानामानंदाः ॥ सएकोदेवा
नामानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंदेवानामानंदाः ॥
सएकइंद्रस्यानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतमिंद्रस्यानंदाः ॥

सएकोबृहस्पतेरानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेयेशतंबृहस्पते
रानंदाः ॥ सएकःप्रजापतेरानंदः ॥ श्रोत्रियस्यचाकामहतस्य ॥ तेये
शतंप्रजापतेरानंदाः ॥ सएकोब्रह्मणआनंदः ॥ श्रोत्रियस्यचाकामह
तस्य ॥ सयश्चायंपुरुषे ॥ यश्चासावादित्ये ॥ सएकः ॥ सयएवंवित् ॥
अस्माल्लोकात्प्रेत्य ॥ एतमन्नमयमात्मानमुपसंक्रामति ॥ एतंप्राणमय
मात्मानमुपसंक्रामति ॥ एतंमनोमयमात्मानमुपसंक्रामति ॥ एतंवि
ज्ञानमयमात्मानमुपसंक्रामति ॥ एतमानंदमयमात्मानमुपसंक्रामति ॥
तदप्येषश्लोकोभवति ॥ यतोवाचोनिवर्तंते ॥ अप्राप्यमनसासह ॥
आनंदंब्रह्मणोविद्वान् ॥ नबिभेतिकुतश्चनेति ॥ एतꣳहवावनतपति ॥
किमहꣳसाधुनाकरवं ॥ किमहंपापमकरवमिति ॥ सयएवंविद्वानेते
आत्मानꣳस्पृणुते ॥ उभेह्येवैषएतेआत्मानꣳस्पृणुते ॥ यएवंवेद ॥

इत्युपनिषत् ॥ २७॥ एषहिदेवःप्रदिशोनुसर्वाःपूर्वौहिजातःसउगर्भे
अंतः॥सविजायमानःसजनिष्यमाणःप्रत्यङ्मुखास्तिष्ठतिविश्वतोमुखः॥
विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोहस्तउतविश्वतस्पात् ॥ संबाहुभ्यां
नमतिसंपतत्रैर्द्यावापृथिवीजनयन्देवएकः ॥ सदसस्पतिमद्भुतंप्रियमिंद्र
स्यकाम्यं ॥ सनिंमेधामयासिषं ॥ उद्दीप्यस्वजातवेदोपघ्नंनिर्ऋतिंमम ॥
पशूꣳश्चमह्यमावहजीवनंचदिशोदिश ॥ पुरुषस्यविद्मसहस्राक्षस्यमा
हादेवस्यधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ तत्पुरुषायविद्महेमहादेवाय
धीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ तत्पुरुषायविद्महेवक्रतुंडायधीमहि ॥
तन्नोदंतिःप्रचोदयात् ॥ तत्पुरुषायविद्महेचक्रतुंडायधीमहि ॥ तन्नो
नंदिःप्रचोदयात् ॥ तत्पुरुषायविद्महेमहासेनायधीमहि ॥ तन्नःष
ण्मुखःप्रचोदयात् ॥ तत्पुरुषायविद्महेसुवर्णपक्षायधीमहि ॥ तन्नोग

हिरण्यगर्भायधीमहि ॥ तन्नोब्रह्म
रुडः प्रचोदयात् ॥ वेदात्मनायविद्महेहिरण्यगर्भायधीमहि ॥ तन्नोविष्णुःप्रचो
प्रचोदयात् ॥ नारायणायविद्महेवासुदेवायधीमहि ॥ तन्नोनारसिंहः
दयात् ॥ वज्रनखायविद्महेतीक्ष्णदंष्ट्रायधीमहि ॥ तन्नोआदित्यः
प्रचोदयात् ॥ भास्करायविद्महेमहद्द्युतिकरायधीमहि ॥ तन्नोअग्निःप्रचो
प्रचोदयात् ॥ वैश्वानरायविद्महेलालीलायधीमहि ॥ तन्नोदुर्गिःप्रचोदयात्
दयात् ॥ कात्यायनायविद्महेकन्यकुमारिधीमहि ॥ तन्नोदुर्गिःप्रचोदयात्
दयात् ॥ सर्वंहरतुमेपापंदूर्वादुः
॥ २८ ॥ सहस्रपरमादेवीशतमूलाशतांकुरा ॥ एवानोदूर्वेप्र
स्वप्ननाशिनी ॥ कांडात्कांडात्प्ररोहंतीपरुषःपरुषःपरि ॥ तस्यास्ते
तनुसहस्रेणशतेनच ॥ याशतेनप्रतनोषिसहस्रेणविरोहसि ॥
देवीष्टकेविधेमहविषावयं ॥ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरा ॥
शिरसाधारयिष्यामिरक्षस्वमांपदेपदे ॥ भूमिर्धेनुर्धरणीलोकधारिणी ॥

उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेहनमेपापंयन्मयादुष्कृतं
कृतं ॥ मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता ॥ मृत्तिकेदेहिमेपुष्टिंत्व
यिसर्वंप्रतिष्ठितं ॥ मृत्तिकेप्रतिष्ठितेसर्वंतन्मोनिर्णुदमृत्तिके ॥ तयाहते
नपापेनगच्छामिपरमांगतिं ॥ यतइंद्रभयामहेततोनोअभयंकृधि ॥ मघ
वन्छग्धितवतन्नऊतयेविद्विषोविमृधोजहि ॥ स्वस्तिदाविशस्पतिर्वृत्रहा
विमृधोवशी ॥ वृषेंद्रःपुरएतुनःस्वस्तिदाअभयंकरः ॥ स्वस्तिनइंद्रोवृद्ध
श्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिःस्वस्तिनो
बृहस्पतिर्दधातु ॥ आपांतमन्युस्तृपलप्रभर्माधुनिःशिमीवांछरुमाँऋ
जीषी ॥ सोमोविश्वान्यतसावनानिनार्वागिंद्रंप्रतिमानानिदेभुः ॥ ब्रह्म
जज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअ
स्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ स्योनापृथिविभवानृक्षरानिवेश

यद्देशांतंतदपगच्छतात् ॥ अत्याशनादतीपानाद्यच्चउग्रात्प्रतिग्रहात् ॥
तन्नोवरुणोराजापाणिनाह्यवमर्शतु ॥ सोहमपापोविरजोनिर्मुक्तोमुक्तकि
ल्बिषः ॥ नाकस्यपृष्ठमारुह्यगच्छेद्ब्रह्मसलोकतां ॥ यश्चाप्सुवरुणःसपु
नात्वघमर्षणः ॥ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमꣳसचतापरुष्णि
या ॥ असिक्नियामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ॥ ऋतंचस
त्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्रिरजायतततःसमुद्रोअर्णवः ॥
समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिष
तोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांत
रिक्षमथोसुवः॥२०॥यत्पृथिव्याꣳरजःस्वमांतरिक्षेविरोदसी ॥ इमाꣳस्त
द्वापोवरुणःपुनात्वघमर्षणः ॥ पुनंतुवसवःपुनातुवरुणःपुनात्वघमर्षणः॥
एषभूतस्यमध्येभुवनस्यगोप्ता ॥ एषपुण्यकृतांलोकानेषमृत्योर्हिरण्मयं ॥

द्यावापृथिव्योर्हिरण्मयँसँश्रितँसुवः ॥ सनःसुवःसँशिशाधि ॥ आ
र्द्रंज्वलतिज्योतिरहमस्मि ॥ ज्योतिर्ज्वलतिब्रह्माहमस्मि ॥ योऽहमस्मिब्रह्मा
हमस्मि ॥ अहमस्मिब्रह्माहमस्मि ॥ अहमेवाहंमांजुहोमिस्वाहा ॥ अका
र्यकार्यवकीर्णीस्तेनोभ्रूणहागुरुतल्पगः ॥ वरुणोपामघमर्षणस्तस्मात्पापा
त्प्रमुच्यते ॥ रजोभूमिस्त्वमाँरोदयस्वप्रवदन्तिधीराः ॥ आक्रान्त्समुद्रः
प्रथमेविधर्मञ्जनयन्प्रजाभुवनस्यराजा ॥ वृषापवित्रेअधिसानोअव्येबृह
त्सोमोवावृधेसुवानइन्दुः ॥ ३१ ॥ जातवेदसेसुनवामसोममरातीयतोनिद
हातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निः ॥ ताम
ग्निवर्णांतपसाज्वलन्तींवैरोचनींकर्मफलेषुजुष्टाम् ॥ दुर्गांदेवीँशरणमहंप्र
पद्येसुतरसितरसेनमः ॥ अग्नेत्वंपारयानव्योअस्मान्स्वस्तिभिरतिदुर्गा
णिविश्वा ॥ पूश्चपृथ्वीबहुलानउर्वीभवातोकायतनयायशंयोः ॥ विश्वा

निनोदुर्गहाजातवेदःसिंधुंननावादुरितातिपर्षि ॥ अग्नेअत्रिवन्मनसागृ
णानोस्माकंबोध्यविताततनूनां ॥ पृतनाजितंसहमानमुग्रमग्निंहुवेमप
रमात्सधस्थात् ॥ सनःपर्षदतिदुर्गाणिविश्वाक्षामद्देवोअतिदुरितात्यग्निः॥
प्रत्नोषिकमीड्योअध्वरेषुसनाच्चहोतानव्यश्चसत्सि ॥ स्वांचाग्नेतनुवंपि
प्रयस्वास्मभ्यंचसौभगमायजस्व ॥ गोभिर्जुष्टमयुजोनिषिक्तंतवेंद्रवि
ष्णोरनुसंचरेम ॥ नाकस्यपृष्ठमभिसंवसानोवैष्णवींलोकइहमादयंतां
॥ ३२ ॥ भूरग्नयेचपृथिव्यैचमहतेचस्वाहाभुवोवायवेचांतरिक्षायचमह
तेचस्वाहासुवरादित्यायचदिवेचमहतेचस्वाहाभूर्भुवःसुवश्चंद्रमसेचनक्ष
त्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहानमोदेवेभ्यःस्वधापितृभ्योभूर्भुवःसुवर्मह
रोम् ॥ पाहिनोअग्नएनसेस्वाहा ॥ पाहिनोविश्ववेदसेस्वाहा ॥ यज्ञं
पाहिविभावसोस्वाहा ॥ सर्वंपाहिशतक्रतोस्वाहा ॥ पाहिनोअग्नए

केया ॥ पाह्युतद्वितीयेया ॥ पाहूर्जंतृतीयेया ॥ पाहिगीर्भिश्चतसृ
भिर्वसोस्वाहा ॥ घृतंमिमिक्षिरेघृतमस्ययोनिर्घृतेश्रितोघृतमुवस्यधा
मं ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यं ॥ समुद्रादूर्मि
र्मधुमाꣳउदारदुपाꣳशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्ति
जिह्वादेवानाममृतस्यनाभिः ॥ वयंनामप्रब्रवामाघृतेनास्मिन्यज्ञेधार
यामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानंचतुःशृंगोवमीद्गौरएतत्
॥ ३३ ॥ सहस्रशीर्षंदेवंविश्वाक्षंविश्वशंभुवं ॥ विश्वंनारायणंदेवमक्षरं
परमंपदं ॥ विश्वतःपरमान्नित्यंविश्वंनारायणꣳहरिं ॥ विश्वमेवेदंपुरु
षस्तद्विश्वमुपजीवति ॥ पतिंविश्वस्यात्मेश्वरꣳशाश्वतꣳशिवमच्युतं ॥
नारायणंमहाज्ञेयंविश्वात्मानंपरायणं ॥ नारायणपरोज्योतिरात्मानारा
यणःपरः ॥ नारायणपरंब्रह्मतत्त्वंनारायणःपरः ॥ नारायणपरोध्या

ताध्यानंनारायणःपरः ॥ यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूयतेपिवा ॥ अंत
र्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः ॥ अनंतमव्ययंकविꣳसमुद्रेंतंवि
श्वशंभुवं ॥ पद्मकोशप्रतीकाशꣳहृदयंचाप्यधोमुखं ॥ अधोनिष्ट्यावि
तस्त्यांतेनाभ्यामुपरितिष्ठति ॥ ज्वालमालाकुलंभातीविश्वस्यायतनंम
हत् ॥ संततꣳशिलाभिस्तुलंबत्याकोशसंनिभं ॥ तस्यांतेसुषिरꣳसूक्ष्मं
तस्मिन्त्सर्वंप्रतिष्ठितं ॥ तस्यमध्येमहानग्निर्विश्वार्चिर्विश्वतोमुखः ॥ सो
ग्रभुग्विभजन्तिष्ठन्नाहारमजरःकविः ॥ तिर्यगूर्ध्वमधःशायीरश्मयःस्तस्य
संतता ॥ संतापयंतिस्वंदेहमापादतलमस्तकः ॥ तस्यमध्येवह्निशिखा
अणीयोर्ध्वाव्यवस्थितः ॥ नीलतोयदमध्यस्थाद्विद्युल्लेखेवभास्वरा ॥
नीवारशूकवत्तन्वीपीताभास्वत्यणूपमा ॥ तस्याःशिखायामध्येपरमात्मा
व्यवस्थितः ॥ सब्रह्मसशिवःसहरिःसेंद्रःसोक्षरःपरमःस्वराट् ॥ ३४ ॥

विश्वंभूतंभुवनंचित्रंबहुधाजातंजायमानंचयत् ॥ सर्वोह्येषरुद्रस्तस्मैरुद्रा
यनमोअस्तु ॥ कद्रुद्रायप्रचेतसेमीढुष्टमायतव्यसे ॥ वोचेमशंतमं
हृदे ॥ सर्वोह्येषरुद्रस्तस्मैरुद्रायनमोअस्तु ॥ आपःपुनंतुपृथिवींपृथि
वीपूतापुनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां ॥ यदुच्छिष्टमभो
ज्यंयद्वादुश्चरितंमम ॥ सर्वंपुनंतुमामापोसतांचप्रतिग्रहं स्वाहा ॥ मेधांम
इंद्रोददातुमेधांदेवीसरस्वती ॥ मेधांमेअश्विनावुभावाधत्तांपुष्करस्रजा ॥
अप्सरासुचयामेधागंधर्वेषुचयन्मनः ॥ देवींमेधासरस्वतीसामांमेधासु
रभिर्जुषतां स्वाहा ॥ आमांमेधासुरभिर्विश्वरूपाहिरण्यवर्णाजगतीज
गम्या ॥ ऊर्जस्वतीपयसापिन्वमानासामांमेधासुप्रतीकाजुषतां ॥ ३९ ॥
अपैतुमृत्युरमृतंनआगन्वैवस्वतोनोअभयंकृणोतु ॥ पर्णंवनस्पतेरिवा
भिनःशीयतां रयिःसचतांनःशचीपतिः ॥ परंमृत्योअनुपरेहिपंथांयस्ते

स्वइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाᳪंरीरिषोमो
तवीरान् ॥ वातंप्राणंमनसान्वारभामहेप्रजापतिंयोभुवनस्यगोपाः ॥
सनोमृत्योस्त्रायतांपात्वᳪंहसोज्योग्जीवाजरामशीमहि ॥ अमुत्रभूयादध
यद्यमस्यबृहस्पतेअभिशस्तेरमुंचः ॥ प्रत्यौहतामश्विनामृत्यमस्माद्देवाना
मग्नेभिषजाशचीभिः ॥ हरिᳪंहरंतमनुयंतिदेवाविश्वस्येशानंवृषभंमती
नां ॥ ब्रह्मसरूपमनुमेदमागादयनंमाविवधीर्विक्रमस्व ॥ शल्कैरग्निमिं
धानउभौलोकौसनेमहं ॥ उभयोर्लोकयोर्ऋध्वातिमृत्युंतराम्यहं ॥ माछि
दोमृत्योमावधीर्मामेबलंविवृहोमाप्रमोषीः ॥ प्रजामामेरीरिषआयुरुग्रनृ
चक्षसंत्वाहविषाविधेम ॥ मानोमहांतं० रीरिषः ॥ मानस्तोके० विधेम
ते ॥ प्रजापतेनत्वं० रयीणां ॥ स्वस्तिदाविश० अभयंकरः ॥ त्र्यंबकं
यजामहे०मामृतात् ॥ येतेसहस्रमयुतंपाशामृत्योमर्त्यायहंतवे ॥ तान्य

ऋग्विधानायस्वाहा ॥ कषोत्कायस्वाहा ॥ क्षुत्पिपासामलांज्येष्ठामलक्ष्मी
नींशयाम्यहं ॥ अभूतिमसंमृद्धिंचसर्वांनिर्णुदमेपाप्मान ँ स्वाहा ॥ अ
न्नमयप्राणमयमनोमयविज्ञानमयमानंदमयमात्मामेशुध्यतांज्योतिरहं
विरजाविपाप्माभूयास ँ स्वाहा ॥ ३७ ॥ श्रद्धायांप्राणेनिविष्टोमृतंजुहो
मि ॥ श्रद्धायामपानेनिविष्टोमृतंजुहोमि ॥ श्रद्धायांव्यानेनिविष्टोमृतं
जुहोमि ॥ श्रद्धायामुदानेनिविष्टोमृतंजुहोमि ॥ श्रद्धाया ँ समानेनिविष्टो
मृतंजुहोमि ॥ ब्रह्मणिमआत्मामृतत्वाय ॥ अमृतोपस्तरणमसि ॥ श्रद्धा
यांप्राणेनिविष्टोमृतंजुहोमि ॥ शिवोमाविशाप्रदाहाय ॥ प्राणायस्वाहा॥
श्रद्धायामपानेनिविष्टोमृतंजुहोमि ॥ शिवोमाविशाप्रदाहाय ॥ अपाना
यस्वाहा ॥ श्रद्धायांव्यानेनिविष्टोमृतंजुहोमि ॥ शिवोमाविशाप्रदाहा
य ॥ व्यानायस्वाहा ॥ श्रद्धायामुदानेनिविष्टोमृतंजुहोमि ॥ शिवो

मोविशाप्रदाहाय ॥ उदानायस्वाहा ॥ श्रद्धायाँ समानेनिविष्टोमृतंजु
होमि ॥ शिवोमाविशाप्रदाहाय ॥ समानायस्वाहा ॥ ब्रह्मणिमआत्मामृ
तत्वाय ॥ औंतद्ब्रह्म ॥ औंतद्वायुः ॥ औंतदात्मा ॥ औंतत्सत्यं ॥ औंतत्स
र्वं ॥ औंतत्पुरोर्नमः ॥ अंतश्चरतिभूतेषुगुहायांविश्वमूर्तिषु ॥ त्वंयज्ञस्त्वं
वषट्कारस्त्वमिंद्रस्त्वँ रुद्रस्त्वंविष्णुस्त्वंब्रह्मत्वंप्रजापतिः ॥ त्वंतदाप
आपोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम् ॥ अमृतापिधानमसि ॥ श्रद्धायां
प्राणेनिविश्यामृतँहुतं ॥ प्राणमन्नेनाप्यायस्व ॥ श्रद्धायामपानेनि
विश्यामृतँहुतं ॥ अपानमन्नेनाप्यायस्व ॥ श्रद्धायांव्यानेनिविश्यामृ
तँहुतं ॥ व्यानमन्नेनाप्यायस्व ॥ श्रद्धायामुदानेनिविश्यामृतँहुतं ॥
उदानमन्नेनाप्यायस्व ॥ श्रद्धायाँ समानेनिविश्यामृतँहुतं ॥ समान
मन्नेनाप्यायस्व ॥ अंगुष्ठमात्रःपुरुषोंगुष्ठंचसमाश्रितः ॥ ईशःसर्वस्य

जगतःप्रभुप्रीणातिविश्वभुक् ॥ वाङ्मआसन् ॥ नसोःप्राणः ॥ अक्ष्यो
श्चक्षुः ॥ कर्णयोःश्रोत्रं ॥ बाहुवोर्बलं ॥ ऊरुवोरोजः ॥ अरिष्टाविश्वा
न्यंगानितनूः ॥ तनुवांमेसहनमस्तेअस्तुमामाहिꣳसीः ॥ ३८ ॥ इति
अरणउपनिषत्समाप्ता ॥

अथदशशांतिप्रारंभः ॥ ॐभद्रंकर्णेभिःशृणुयामदेवाः ॥ भद्रंप
श्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिः ॥ व्यशेमदेवहितं
यदायुः ॥ स्वस्तिनइंद्रोवृद्धश्रवाः ॥ स्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्ति
नस्तार्क्ष्योअरिष्टनेमिः ॥ स्वस्तिनोबृहस्पतिर्दधातु ॥ ॐशांतिःशांतिः
शांतिः ॥ ॐनमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः ॥
नमोवाचेनमोवाचस्पतयेनमोविष्णवेबृहतेकरोमि ॥ ॐशांतिःशांतिः
शांतिः ॥ ॐतच्छंयोरावृणीमहे ॥ गातुंयज्ञाय ॥ गातुंयज्ञपतये ॥

दैवीस्वस्तिरस्तुनः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शंनो
अस्तुद्विपदे ॥ शंचतुष्पदे ॥ ॐशांतिःशांतिःशांतिः ॥ नमोवाचेया
चोदितायाचानुदितातस्यैवाचेनमोनमोवाचेनमोवाचस्पतयेनमऋषि
भ्योमंत्रकृद्भ्योमंत्रपतिभ्योमामामृषयोमंत्रकृतोमंत्रपतयःपरादुर्माहमृषी
न्मंत्रकृतोमंत्रपतीन्परादांवैश्वदेवींवाचमुद्यासंशिवामदस्तांजुष्टांदेवे
भ्यःशर्ममेद्यौःशर्मपृथिवीशर्मविश्वमिदंजगत् ॥ शर्मचंद्रश्चसूर्यश्चशर्म
ब्रह्मप्रजापती ॥ भूतंवदिष्येभुवनंवदिष्येतेजोवदिष्येयशोवदिष्येतपो
वदिष्येब्रह्मवदिष्येसत्यंवदिष्येतस्माअहमिदमुपस्तरणमुपस्तृणउपस्त
रणंमेप्रजायैपशूनांभूयादुपस्तरणमहंप्रजायैपशूनांभूयासंप्राणापानौमृ
त्योर्मापातंप्राणापानौमामाहासिष्टंमधुमनिष्येमधुजनिष्येमधुवक्ष्यामि
मधुवदिष्यामिमधुमतींदेवेभ्योवाचमुद्यासंशुश्रूषेण्यांमनुष्येभ्यस्तंमा

देवाअवंतुशोभायैपितरोनुमदंतु ॥ ॐशांतिःशांतिःशांतिः ॥ ॐशंनो
वातःपवतांमातरिश्वाशंनस्तपतुसूर्यः ॥ अहानिशंभवंतुनःशंरात्रिः
प्रतिधीयतां ॥ शमुषानोव्युच्छतुशमादित्यउदेतुनः ॥ शिवानःशंतमा
भवसुमृडीकासरस्वति ॥ मातेव्योमसंदृशि ॥ इडायैवास्त्वसिवास्तुम
द्वास्तुमंतोभूयास्ममावास्तोश्छित्स्मह्यवास्तुःसभूयाद्योस्मान्द्वेष्टियंचवयं
द्विष्मः ॥ प्रतिष्ठासिप्रतिष्ठावंतोभूयास्ममाप्रतिष्ठायाश्छित्स्मह्यप्रतिष्ठः
सभूयाद्योस्मान्द्वेष्टियंचवयंद्विष्मः ॥ आवातवाहिभेषजंविवातवाहिय
द्रपः ॥ त्वंहिविश्वभेषजोदेवानांदूतईयसे ॥ द्वाविमौवातौवातआसिं
धोरापरावतः ॥ दक्षंमेअन्यआवातुपरान्योवातुयद्रपः ॥ यद्दोवाततेगृहेस्तृतस्यनिधिर्हितः ॥ ततोनोदेहिजीवसेततोनोधेहिभेषजं ॥ ततो
नोमहआवहवातआवातुभेषजंशंभूर्मयोभूर्नोहृदे ॥ प्रणआयूंषिता

रिषत् ॥ इंद्रस्यगृहोसितंत्वाप्रपद्येसगुःसाश्वः ॥ सहयन्मेअस्तितेन ॥
भूःप्रपद्येभुवःप्रपद्येसुवःप्रपद्येभूर्भुवःसुवःप्रपद्येवायुंप्रपद्येनार्तांदेवतांप्र
पद्येश्मानमाखणंप्रपद्येप्रजापतेर्ब्रह्मकोशंब्रह्मप्रपद्यओंप्रपद्ये ॥ अंतरि
क्षंमउर्वंतरंबृहदग्नयःपर्वताश्चययावातःस्वस्त्यास्वस्तिमांतयास्वस्त्यास्व
स्तिमानसानि ॥ प्राणापानौमृत्योर्मापातंप्राणापानौमामाहासिष्टंमयि
मेधांमयिप्रजांमय्यग्निस्तेजोदधातुमयिमेधांमयिप्रजांमयींद्रइंद्रियंदधा
तुमयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु ॥ द्युभिरक्तुभिःपरिपातम
स्मानरिष्टेभिरश्विनासौभगेभिः ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिं
धुःपृथिवीउतद्यौः ॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाश
चिष्ठयावृता ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः ॥ दृढाचिदारु
जेवसु ॥ अभीषुणःसखीनामविताजरितॄणां ॥ शतंभवास्यूतिभिः ॥

वयः सुपर्णाउपसेदुरिंद्रंप्रियमेधाऋषयोनाधमानाः ॥ अपध्वांतमूर्णुहि
पूर्धिचक्षुर्मुमुग्ध्यस्मान्निधयेवबद्धान् ॥ शंनोदेवीरभिष्टयआपोभवंतुपी
तये ॥ शंयोरभिस्रवंतुनः ॥ ईशानावार्याणांक्षयंतीश्चर्षणीनां ॥ अपो
याचामिभेषजं ॥ सुमित्रानआपओषधयःसंतुदुर्मित्रास्तस्मैभूयासुर्योस्मा
न्द्वेष्टियंचवयंद्विष्मः ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेर
णायचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमा
तरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥
पृथिवीशांतासाग्निनाशांतासामेशांताशुच ँ शमयतु ॥ अंतरिक्ष ँ शांतं
तद्वायुनाशांतंतन्मेशांत ँ शुच ँ शमयतु ॥ द्यौःशांतासादित्येनशांतासा
मेशांताशुच ँ शमयतु ॥ पृथिवीशांतिरंतरिक्ष ँ शांतिर्द्यौःशांतिर्दिशःशां
तिरवांतरदिशाःशांतिरग्निःशांतिर्वायुःशांतिरादित्यःशांतिश्चंद्रमाःशांति

नातु ॥ ब्रह्मणश्चोतन्यसिब्रह्मणआणीस्थोब्रह्मणआवपनमसिधारितेयं
पृथिवीब्रह्मणामहीधारितमेनेनमहदंतरिक्षंदिवंदाधारपृथिवीᳬसदेवांय
दहंवेदतदहंधारयाणिमामद्वेदोधिविस्त्रसत् ॥ मेधामनीषेमाविशताᳬस
मीचींभूतस्यभव्यस्यावरुध्यैसर्वमायुरयाणिसर्वमायुरयाणि ॥ आभिर्गी
र्भिर्यदतोनऊनमाप्यायययहरिवोवर्धमानः ॥ यदास्तोतृभ्योमहिगोत्रारुजा
सिभूयिष्ठभाजोअधतेस्याम ॥ ब्रह्मप्रावादिष्मतन्नोमाहासीत् ॥ ॐशांतिः
शांतिःशांतिः ॥ ॐसंत्वासिंचामियजुषाप्रजामायुर्धनंच ॥ ॐशांतिः
शांतिःशांतिः ॥ ॐशंनोमित्रःशंवरुणः ॥ शंनोभवत्वर्यमा ॥ शंनइंद्रो
बृहस्पतिः ॥ शंनोविष्णुरुरुक्रमः ॥ नमोब्रह्मणे ॥ नमस्तेवायो ॥ त्वमे
वप्रत्यक्षंब्रह्मासि ॥ त्वमेवप्रत्यक्षंब्रह्मवदिष्यामि ॥ ऋतंवदिष्यामि ॥
सत्यंवदिष्यामि ॥ तन्मामवतु ॥ तद्वक्तारमवतु ॥ अवतुमां ॥ अवतु

शांतिः ॥ सहनाववतु ॥ इतित्रिःॐशांतिः

वक्तारं ॥ ॐशांतिःशांतिःशांतिः ॥ इतिदशशांतयःसमाप्ताः ॥

शांतिःशांतिः ॥

अथहिरण्यकेशीसूत्रमंत्रप्रारंभः ॥ ॐ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेंधिवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधय ॥ युक्तोवहजातवेदःपुरस्तादग्नेविद्धिकर्मक्रियमाणंयथेदं ॥ त्वंभिषक्भेषजस्यासिकर्तात्वयागाश्वान्पुरुषान्सनेम ॥ यातिरश्चीनिपद्यसेहंविधरणीइति ॥ तांत्वाघृतस्यधारयाग्नौसंराधनींयजे ॥ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं ॥ अग्निष्टत्स्विष्टकृद्विद्वान्सर्वंस्विष्टंसुहुतंकरोतुमे ॥ अग्नयेस्विष्टकृतेसुहुतहुतेसर्वहुतआहुतीनांकामानांसमर्धयित्रेस्वाहा ॥ समुद्रंवःप्रहिणोम्यक्षितास्वांयोनिमपिगच्छत ॥ अच्छिद्रःप्रजयाभूयासंमापरासेचिमत्पयः॥ येचेहपितरोयेचनेहयांश्चविद्मयां

उच्चनप्रविद्ध ॥ अग्नेतान्वेत्थयदितेजातवेदस्तयाप्रत्त ँ स्वधयामदंतुस्व
धानमः ॥ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि ॥ अयसाम्न
साघृतोयसाहव्यमूहिषेयानोधेहिभेषज ँ स्वाहा ॥ १ ॥ योब्रह्माब्रह्मणउ
ज्ज्रभारप्राणेश्वरःकृत्तिवासाःपिनाकी ॥ ईशानोदेवःसनआयुर्दधातुतस्मै
जुहोमिहविषाघृतेनस्वाहा ॥ विभ्राजमानःसरिरस्यमध्याद्रोचमानाघर्म
रुचिर्यआगात् ॥ समृत्युपाशानपनुद्यघोरानिहायुषेनोघृतमत्तुदेवास्वा
हा ॥ ब्रह्मज्योतिर्ब्रह्मपत्नीषुगर्भयमोदधात्पुरुरूपंजयंतं ॥ सुवर्णरंभंगृहम
र्कमर्चन्नमायुषेवर्धयामोघृतेनस्वाहा ॥ श्रियंलक्ष्मीमंबिकामोपलांगांषष्ठीं
चयामिंद्रसेनेत्युदाहुः ॥ तांविद्यांब्रह्मयोनि ँ सरूपामिहायुषेतर्पयामोघृ
तेनस्वाहा ॥ दाक्षायण्यःसर्वयोन्यःसयोन्यःसहस्रशोविश्वरूपाविरूपाः ॥
ससूनवःसपतयःसयूथ्याआयुषेनोघृतमिदंजुषता ँ स्वाहा ॥ दिव्याग

भर्तुसजायतांवीरतमःस्वानां ॥ आतेगर्भोयोनिमेतुपुमान्बाणइवेषुधिं ॥
आवीरोअत्रजायतांपुत्रस्तेदशमास्यः ॥ करोमितेप्राजापत्यमागर्भोयोनि
मेतुते ॥ अनूनःपूर्णोजायतामनंधोश्लोणोपिशाचधीरः ॥ यानिप्रभूणि
वीर्याण्यृषभाजनयंतुनः ॥ तैस्त्वंगर्भिणीभवसजायतांवीरतमःस्वानां ॥
योवशायांगर्भोयश्चवेहतींद्रस्तंनिदधेवनस्पतौ ॥ तेनत्वंगर्भिणीभवसा
प्रसूर्धेनुगाभव ॥ सन्नान्नःसꣳहृदयानिसन्नाभिःसंत्वचः ॥ संत्वाकामस्य
योक्रेणयुंजान्याविमोचनाय ॥ मामनुव्रताभवसहचर्यामयाभव ॥ यातेप
तिघ्नीतनूर्जारघ्नींत्वेतांकरोमिशिवात्वंमह्यमेधिक्षुरपाविजारेभ्यः ॥ अथा
स्यैमुखेनमुखमीप्सतेमधुहेमाध्विदंमधुजिह्वामेमधुवादिनी ॥ मुखेमेसार
घंमधुदत्सुसंवननंकृतं ॥ चक्रवाकꣳसंवननंयन्नदीभ्यउदाहृतं ॥ यद्युक्तो
देवगंधर्वस्तेनसंवनिनौस्वकः ॥ भूःप्रजापतिनात्यृषभेणस्कंदयामिवीरं

धस्व ॥ भुवःप्रजापतिनात्वार्षभेणस्कंदयामिवीरंधस्व ॥ सुवःप्रजाप
तिनात्वार्षभेणस्कंदयामिवीरंधस्व ॥ ३ ॥ विश्वाउतत्वयावयंधाराउद
न्याइव ॥ अतिगाहेमहिद्विषः ॥ अश्माभवपरशुर्भवहिरण्यमस्तृतंभ
व ॥ वेदोवैपुत्रनामासिसजीवशरदःशतं ॥ अंगादंगात्संभवसिहृदया
दधिजायसे ॥ आत्मावैपुत्रनामासिसजीवशरदःशतं ॥ शंडोमर्कउप
वीरःशांडिकेरउलूखलः ॥ च्यवनोनश्यतादितःस्वाहा ॥ आलिखन्वि
लिखन्ननिमिषन्किंवदंतउपश्रुतिःस्वाहा ॥ अर्यम्णःकुंभीशत्रुःपात्रपाणि
र्निपुणिःस्वाहा ॥ आंत्रीमुखःसर्षपारुणोनश्यतादितःस्वाहा ॥ केशिनी
श्वलोमिनीवजाबोजोपकाशिनी ॥ अपेतनश्यतादितःस्वाहा ॥ कौबेर
काविश्ववासोरक्षोराजेनप्रेषिताः ॥ ग्रामान्त्सजातयोयंतीप्संतःपरिजा
कृतान्त्स्वाहा ॥ एतान्हतैतान्बध्नीतेत्ययंब्रह्मणोदूतस्तानग्निःपर्यसरत् ॥

तानिंद्रस्तान्बृहस्पतिस्तानहंवेदब्राह्मणःप्रमृशतःकूटदंतान्विकेशान्लंब
स्तनान्स्वाहा ॥ नक्तंचारिणउरस्पेशान्छूलहस्तान्कपालपान्स्वाहा ॥
माताजघन्यागच्छंतीग्रामेविखुरमिच्छंतीस्वाहा ॥ नक्तंचारिणीस्वसासं
धिनाप्रेक्ष्यतेकुलं ॥ यास्वपत्सुजागर्तियस्यैविजातायांमनःस्वाहा ॥ ता
सांत्वंकृष्णवर्त्मनेक्लोमानꣳहृदयंयकृत् ॥ अग्नेक्षिणीनिर्दहस्वाहा ॥
यत्तेसुशीमेहृदयंदिविचंद्रमसिश्रितं ॥ तस्यामृतत्वस्यनोधेहिमाहंपौत्र
मघꣳरुदं ॥ वेदतेभूमिहृदयंदिविचंद्रमसिश्रितं ॥ तथामृतत्वस्येशा
नोमापौत्रमघꣳरुदं ॥ ४ ॥ मातेपुत्रꣳरक्षोहिꣳसीन्माधेनुरतिसारिणी ॥
प्रियाधनस्यभूयाएधमानास्वेवशे ॥ अयंकुमारोजरांधयतुसर्वमायुरेतु
तस्मैस्तनंप्रप्यायस्वायुःकीर्तिर्वर्चोयशोबलं ॥ नामयतिनरुदतियत्रव
यंवदामोयत्रवाभिमृशामसि ॥ आपोगृहेषुजाग्रतयथादेवेषुजाग्रथ ॥

एवमस्यैसुपुत्रायैजाग्रत ॥ येनपूषाबृहस्पतेरग्नेरिंद्रस्यचायुषेवपत् ॥
तेनतेहंवपामि ॥ यथाज्योक्सुमनाअसत् ॥ ज्योक्चसूर्यंदृशे ॥ यत्रपू
षाबृहस्पतिःसवितासोमोअग्निः ॥ तेभ्योनिधानंबहुधाव्यैच्छन्नंतराद्या
वापृथिवीअपःसुवः ॥ येतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितताःपुरु
त्रा ॥ तेभ्योनइंद्रःसवितोताविष्णुर्विश्वेदेवामुंचंतुमरुतःस्वस्त्यास्वाहा ॥
आयुर्दादेवजरसंगृणानोघृतप्रतीकोघृतपृष्ठोअग्ने॥ घृतंपिबन्नमृतंचारुग
व्यंपितेवपुत्रंजरसेनयेम ँ स्वाहा ॥ आतिष्ठेममश्मानमश्मेवत्व ँ स्थिरो
भव॥ प्रमृणीहिदुरस्यून्त्सहस्वपृतनायतः ॥ याअकृंतन्नवयन्याअतन्व
तयाश्चदेवीरंतानभितोददंत ॥ तास्त्वादेवीर्जरसासंव्ययन्त्वायुष्मानिदं
परिधत्स्ववासः॥ परिधत्तधत्तवाससैन ँ शतायुषंकृणुतदीर्घमायुः॥ बृह
स्पतिःप्रायच्छद्वासएतत्सोमायराज्ञेपरिदातवाउ ॥ जरांगच्छासिपरिध

त्स्ववासोभवाकृष्टीनामभिशास्तिपावा ॥ शतंचजीवशरदःसुवर्चारायश्च
पोषमुपसंव्ययस्व॥परीदंवासोधिधास्वस्तयेभूरापीणामभिशास्तिपावा ॥
शतंचजीवशरदःपुरूचीर्वसूनिचार्य्योविभजासजीवन् ॥ ५ ॥ यादुरि
तापरिबाधमानाशर्मवरूथेपुनतीनआगात् ॥ प्राणापानाभ्यांबलमाव
हंतीस्वसादेवानाᳪसुभगामेखलेयं ॥ मित्रस्यचक्षुर्धरुणंधरीयस्तेजोयश
स्विस्थविरᳪसमिद्धं॥ अनाहनस्यंवसनंजरिष्णुपरीदंवाज्यजिनंधत्स्व ॥
अदितिस्तेकक्षांबध्नातु ॥ वेदस्यानुवक्तवैमेधायैश्रद्धायाअनूक्तस्यानिरा
करणायब्रह्मणेब्रह्मवर्चसाय ॥ परीममिंद्रब्रह्मणेमहेश्रोत्रायदध्मस्यथै
नंजरिमाणयेज्योक्श्रोत्रेधिजागरत् ॥ आगंतासमगन्महिप्रसमृत्युंयुयो
तन ॥ अरिष्टाःसंचरेमहिस्वस्तिचरतादिहस्वस्त्यागृहेभ्यः ॥ ब्रह्मचर्य
मागामुपमानयस्वब्रह्मचारीभवानिदेवेनसवित्राप्रसूतः ॥ स्वस्तिदेवस

वितरहमनेनामुनोद्दचमशीय ॥ अग्नौपृथिव्यांप्रतितिष्ठवायावंतरिक्षे
सूर्येदिवियाꣳस्वस्तिमग्निर्वायुरादित्यश्चंद्रमाआपोनुसंचरंतिताꣳस्व
स्तिमनुसंचर ॥ अग्नयेसमिधमाहार्षंबृहतेजातवेदसे ॥ यथात्वमग्नेस
मिधासमिध्यसएवंमांमेधयाप्रज्ञयाप्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनस
मेधयस्वाहा ॥ अग्निष्टआयुःप्रतरांकृणोत्वग्निष्टेपुष्टिंप्रतरांदधात्विंद्रोमरु
द्भिरिहतेदधात्वादित्यस्तेवसुभिरादधातु॥ यस्यतेप्रथमवास्यꣳहरामस्तं
त्वाविश्वेअवंतुदेवाः ॥ तंत्वाभ्रातरःसुहृदोवर्धमानमनुजायतांबहवःसु
जातं॥ एषातेअग्नेसमित्तयावर्धस्वचाचप्यायस्व ॥ वर्धिषीमहिचवयमा
चप्यासिषीमहिस्वाहा ॥६॥ इमꣳस्तोममर्हतेजातवेदसेरथमिवसंमहे
मामनीषया॥ भद्राहिनःप्रमतिरस्यसꣳसद्यग्नेसख्येमारिषामावयंतवस्वा
हा ॥ क्षुरोनामासिस्वधितिस्तेपितानमस्तेअस्तुमामाहिꣳसीः॥यत्क्षुरेण

मर्चयथासुपेशसावसर्वपसिकेशश्मश्रुवर्चयामुखंमानआयुःप्रमोषीः॥इद
महममुष्यामुष्यायणस्यपाप्मानमवगूहामि ॥ अन्नाद्यायव्यूहध्वंदीर्घायु
त्वायव्यूहध्वंब्रह्मवर्चसायव्यूहध्वंदीर्घायुरहमन्नादोब्रह्मवर्चसीभूयासं ॥
नमोग्रहायचाभिग्रहायचनमःशाकजंजभाभ्यांनमस्ताभ्योदेवताभ्योया
अभिग्राहणीः ॥ अप्सरासुचयोगंधोगंधर्वेषुचयद्यशः॥दैव्योयोमानुषोगं
धःसमामाविशतादिह ॥ सोमस्यतनूरसितनुवंमेपाहिस्वामातनूराविश
शिवामातनूराविश ॥ आयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदं ॥ इदꣳहिरण्य
मायुषेवर्चसेजैत्रायाविशतांमाꣳस्वाहा ॥ उच्चैर्वाजिपृतनासाहꣳसभासा
हंधनंजयं ॥ सर्वाःसमग्राऋद्धयोहिरण्येसिन्त्समाभृताःस्वाहा ॥ शुनम
हꣳहिरण्यस्यपितुरिवनामाग्रभीषं॥तंमाहिरण्यवर्चसंकरोतुपुरुषुप्रियंब्र
ह्मवर्चसिनंमाकरोतुस्वाहा ॥ प्रियंमाकुरुदेवेषुप्रियंमाब्रह्मणिकुरु ॥ प्रियं

विश्येपुशूद्रेपुप्रियंमाकुरुराजसुस्वाहा ॥ इयमोपधेत्रायमाणासहमानास
रस्वती ॥सामाहिरण्यवर्चसंकरोतुपुरुषुप्रियंब्रह्मवर्चसिनंमाकरोतुस्वाहा
॥७॥ विराजंचस्वराजंचाभिष्टिर्याचनोगृहे ॥ लक्ष्मीराष्ट्रस्ययामुखेतयामा
सꣳसृजामसि ॥ ऋतुभिष्ट्वार्तवैरायुपेवर्चसेसंवत्सरस्यधायसातेनसन्ननु
गृह्णासि ॥ इयमोपधेत्रायमाणासहमानासरस्वती ॥ सामाहिरण्यवर्चसं
करोतुपुरुषुप्रियंब्रह्मवर्चसिनंमाकरोत्वपाशोसि ॥ शुभिकेशोभमारोह
शोभयंतीमुखंमम ॥ मुखंचममशोभयभूयाꣳसंचभगंकुरु ॥ यामाहरञ्ज
मदग्निःश्रद्धायैकामायास्यै ॥ इमांतांप्रतिमुंचेहंभगेनसहवर्चसमयिपर्वत
पूरुषं ॥ यदांजनंत्रैककुदंजातꣳहिमवतउपरि ॥ तेनवामांजेहंभगेन
सहवर्चसामयिपर्वतपूरुषं ॥ वेगवेजयास्मतद्विषतस्करान्तसरीसृपान्
श्वापदान्रक्षाꣳसिपिशाचान्पौरुषेयाद्भयान्नोदंडरक्षविश्वस्माद्भयाद्रक्ष

सर्वतोजहितस्करानननः सर्वंवृक्षेषुजायसेत्वꣳसपत्नहा ॥ जहिशत्रुग
णान्त्सर्वान्त्संमतंमघवानिव ॥ योमेदंडःपरापतद्विहायसोधिभूम्यां ॥
इमंतंपुनरादददेयमायुषेचबलायच ॥ विराजोदोहोसिमयिदोहःपद्यायै
विराज ॥ आत्मानमभिमृशति ॥ मयितेजइंद्रियंवीर्यमायुःकीर्तिर्वर्चो
यशोबलं ॥ आमागन्यशसासꣳसृजतेजसावर्चसापयसाच ॥ तंमाकु
रुप्रियंप्रजानामधिपतिंपशूनां ॥ यन्मधुनोमधव्यंपरममन्नाद्यꣳरूपं ॥
तेनाहंमधुनोमधव्येनपरमेणरूपेणपरमोमधव्योन्नादोभूयासं ॥ तेज
सेत्वाश्रियैयशसेबलायान्नाद्यायप्राश्नामि ॥ ८ ॥ सुमंगलीरियंवधूरि
माꣳसमेतपश्यत ॥ सौभाग्यमस्यैदत्वायाथास्तंविपरेतन ॥ अग्निरैतु
प्रथमोदेवतानाꣳसोस्यैप्रजांमुंचतुमृत्यपाशात् ॥ तदयꣳराजावरुणो
नुमन्यतांयथेयꣳस्त्रीपौत्रमघंनरोदात्स्वाहा ॥ इमामग्निस्त्रायतांगार्हप

त्यः प्रजामस्यैनयतु दीर्घमायुः ॥ अशून्योपस्था जीवतामस्तु माता पौत्र
मानंदमभिप्रबुध्यतामियᳪस्वाहा ॥ मा ते गृहे निशि घोष उत्थादन्यत्र
त्वद्रुदत्यः संविशंतु ॥ मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विरा
ज प्रजां पश्यंती सुमनस्यमानाᳪस्वाहा ॥ द्यौस्ते पृष्ठᳪरक्षतु वायुरूरू अ
श्विनौ च स्तनं धयतस्ते पुत्रान्त्सविताभिरक्षतु ॥ आवाससः परिधानाद्बृह
स्पतिर्विश्वेदेवा अभिरक्षंतु पश्चात्स्वाहा ॥ अप्रजस्तां पौत्रमृत्युं पाप्मानमु
त वाघं ॥ शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुंचामि पापᳪस्वाहा ॥
देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान् ॥ क्रव्यादो मृ
त्यूनधरान्पादयामि दीर्घमायुस्तव जीवंतु पुत्राः स्वाहा ॥ १ ॥ सरस्वति
प्रेदमव सुभगे वाजिनीवति ॥ तां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः ॥
गृह्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथासत् ॥ भगो अर्यमा

सवितापुरंधिर्मह्यंत्वादुर्गार्हपत्यायदेवाः ॥ अघोरचक्षुरपतिघ्न्येधिशि
वापशुभ्यःसुमनाःसुवर्चाः ॥ जीवसूर्वीरसूःस्योनाशंनएधिद्विपदेशंच
तुष्पदे ॥ तान्नःपूषंछिवतमामेरयस्वयस्यांबीजंमनुष्यावपंति ॥ यान
ऊरूउशतीविश्रयातेयस्यामुशंतःप्रहरेमशेपं ॥ सोमःप्रथमोविविदेगं
धर्वोविविदउत्तरः ॥ तृतीयोअग्निष्टेपतिस्तुरीयोहंमनुष्यजाः ॥ सोमो
ददद्गंधर्वायगंधर्वोग्नयेददात् ॥ पशूँश्चमह्यंपुत्राँश्चाग्निर्ददात्यथोत्वां॥
अमुहमास्मिसात्वंद्यौरहंपृथिवीत्वँसामाहमृक्त्वंतावेहिसंभवावसहरे
तोदधावहैपुँसेपुत्रायवेत्तवैरायस्पोषायसुप्रजास्त्वायसुवीर्याय॥इमांत्व
मिंद्रमीढ्वःसुपुत्राँसुभगांकुरु॥दशास्यांपुत्रानाधेहिपतिमेकादशंकुरु॥
इमांल्लाजानावपामिसमृद्धिकरणान्मम ॥ तुभ्यंचसंवननंतदग्निरनुमन्य
तामयं॥इयंनार्युपब्रूतेग्नौलाजानावपंतीदीर्घायुरस्तुमेपतिरेधंतांज्ञातयो

ममस्वाहा ॥ विश्वाउतत्वयावयंधाराउदन्याइव ॥ अतिगाहेमहिद्विषः
॥ १० ॥ सप्तर्षयःप्रथमांकृत्तिकानामरुंधतीं ॥ येध्रुवताꣳहनिन्युः ॥ षट्कृ
त्तिकामुख्ययोगंवहंतीयमस्माकंभ्राजत्वष्टमिति ॥ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रु
वमसिध्रुवतस्थितं ॥ त्वंनक्षत्राणांमेथ्यसिसमापाहिपृतन्यतः ॥ नमोब्रह्म
णेध्रुवायाच्युतायास्तुनमोब्रह्मणःपुत्रायप्रजापतयेनमोब्रह्मणःपुत्रेभ्योदे
वेभ्यस्त्रयस्त्रिꣳशेभ्योनमोब्रह्मणःपुत्रपौत्रेभ्योंगिरोभ्योयस्त्वांध्रुवमच्युत
ꣳसपुत्रꣳसपौत्रंब्रह्मवेदध्रुवाअस्मिन्पुत्राःपौत्राभवंतिप्रेष्यांतेवासिनोव
सनंकंबलानिकꣳसꣳहिरण्यꣳस्त्रियोराजानोन्नमभयमायुःकीर्तिर्वर्चोय
शोबलंब्रह्मवर्चसमन्नाद्यमित्येतानिमयिसर्वाणिध्रुवाण्यच्युतानिसंतु ॥
ध्रुवंत्वाब्रह्मवेदध्रुवोहमस्मिन्लोकेस्मिꣳश्चजनपदेभूयासमच्युतंत्वाब्रह्म
वेदमाहमस्माल्लोकादस्माच्चजनपदाच्योषिद्विषन्मेभ्रातृव्योस्माल्लोकाद

स्माच्चजनपदाच्च्यवतामच्चेष्टुंत्वाब्रह्मवेदमाहमस्माल्लोकादस्माच्चजनपदा
च्चेष्टिषिद्विषन्मेभ्रातृव्योस्माल्लोकादस्माच्चजनपदाच्चेष्टतामव्यथमानंत्वा
ब्रह्मवेदमाहमस्माल्लोकादस्माच्चजनपदाद्व्यथिषिद्विषन्मेभ्रातृव्योस्माल्लो
कादस्माच्चजनपदाद्व्यथतां ॥ नभ्यंत्वासर्वस्यवेदनभ्यमहमस्यजनप
दस्यभूयासंमध्यंत्वासर्वस्यवेदमध्यमहमस्यजनपदस्यभूयासंतंतिंत्वासर्व
स्यवेदतंतिरहमस्यजनपदस्यभूयासंमेथींत्वासर्वस्यवेदमेथ्यमहमस्यज
नपदस्यभूयासंनाभिंत्वासर्वस्यवेदनाभिरहमस्यजनपदस्यभूयासंयथा
नाभिःप्राणानांविषूवानेवमहंविषूवानेकशतंतंपाप्मानमृच्छतुयोस्मान्द्वे
ष्टियंचवयंद्विष्मोभूयाꣳसिमामेकशतात्पुण्यान्यागच्छंतु ॥ ११ ॥ अग्ने
प्रायश्चित्तेत्वंप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामियास्यैघोरा
तनूस्तामितोनाशयस्वाहा ॥ वायोप्रायश्चित्तेत्वंप्रायश्चित्तिरसिब्राह्मण

स्त्वानाथकामउपधावामियास्यैनिंदितातनूस्तामितोनाशयस्वाहा ॥ आ
दित्यप्रायश्चित्तेत्वंप्रायश्चित्तिरसिब्राह्मणस्त्वानाथकामउपधावामिया
स्यैपतिघ्नीतनूस्तामितोनाशयस्वाहा ॥ अभित्वापंचशाखेनशिवेनाभि
मृशामसि ॥ सहस्रेणयशस्विनाहस्तेनाभिमृशामसिसुप्रजास्त्वायेति ॥
द्विषावता ॥ तमस्मभ्यंकामंदत्वाथेदंत्वं
यस्मैत्वाकामकामायवयँसम्राड्यजामहे ॥ तमस्मभ्यंकामंदत्वाथेदंत्वं
घृतंपिबस्वाहा ॥ इहैवध्रुवांनिमिनोमिशालांक्षेमेतिष्ठतिघृतमुक्षमाणा ॥
तांत्वाशालेसुवीराःसर्ववीराअरिष्टवीराअनुसंचरेम ॥ इहैवध्रुवाप्रति
तिष्ठशालेअश्वावतीगोमतीसूनृतावती ॥ ऊर्जस्वतीपयसापिन्वमाना
च्छ्रयस्वमहतेसौभगाय ॥ आत्वाकुमारस्तरुणआवत्सोजगतासह ॥
आत्वाहिरण्मयःकुंभआदध्नःकलशैरयन्निव ॥ ऋतेनस्थूणावधिरोहवँ
शोध्वोविराजन्नपसेधशत्रून् ॥ अथास्मभ्यँसहवीराँरयिंदाः ॥ मानः

सपत्नःशरणःस्योनादेवोदेवेभिर्विमतास्यग्रे ॥ तृणंवसानाःसुमनाअसि
त्वꣳशंनएधिद्विपदेशंचतुष्पदे ॥ १२ ॥ गृहामाबिभीतमावेपिध्वमूर्ज
बिभ्रतएमसि ॥ ऊर्जंबिभ्रद्वसुवनिःसुमेधागृहानेमिमनसामोदमानः ॥
येषामध्येतिप्रवसन्नेतिसौमनसोबहुः ॥ गृहानुपह्वयामहेतेनोजानंतु
जानतः ॥ उपहूताइहगावउपहूताअजावयः ॥ अथोअन्नस्यकीलाल
उपहूतोगृहेषुनः ॥ उपहूताभूरिसखाःसखायःस्वादुसंमुदः ॥ अरिष्टाः
सर्वपूरुषागृहानःसंतुसर्वदा ॥ ऊर्जस्वंतःपयस्वंतइरावंतोहसामुदः ॥
अनश्याअतृष्यागृहामास्मद्बिभीतन ॥ क्षेमायवःशांत्यैप्रपद्येशिवꣳशग्म
शंयोःशंयोः ॥ गृहानहꣳसुमनसःप्रपद्येवीरघ्नोवीरतमःसुशेवान् ॥ इ
रावहंतःसुमनस्यमानास्तेष्वहꣳसुमनाःसंशामि ॥ १३ ॥ इतिहिरण्य
केशीयसूत्रभागःसमाप्तः ॥

अथयजुर्वेदमंत्रप्रारंभः ॥ सशिराजातवेदाः ॥ अक्षरंब्रह्मसंमितं ॥
वेदानाꣳशिरउत्तमं ॥ जातवेदसेशिरसामाता ॥ स्वयंब्रह्मभूर्भुवःसुवरो
म् ॥ यज्जाग्रतोदूरमुदैतुदैवंतदुसुप्तस्यतथैवैति ॥ दूरंगमंज्योतिषांज्योतिरे
कंतन्मेमनःशिवसंकल्पमस्तु ॥ येनकर्माण्यपसोमनीषिणोयज्ञेकृण्वंतिवि
दथेषुधीराः ॥ यदपूर्वंयक्षमंतःप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ य
त्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरंतरमृतंप्रजासु ॥ यस्मान्नऋतेकिंचनक
र्मक्रियतेतन्मेमनःशिवसंकल्पमस्तु ॥ येनेदंभूतंभुवनंभविष्यत्परिगृही
तममृतेनसर्वं ॥ येनयज्ञस्तायतेसप्तहोतातन्मेमनःशिवसंकल्पमस्तु ॥
यस्मिन्नृचःसामयजूꣳषियस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥ यस्मिꣳश्चि
त्तꣳसर्वमोतंप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ सुषारथिरश्वानिवयं

मनुष्यान्नेनीयतेभीशुभिर्वाजिनइव ॥ हृत्प्रतिष्ठंयदजिरंयविष्ठंतन्मेमनः
शिवसंकल्पमस्तु ॥ इतियजुर्वेदमंत्राःसमाप्ताः ॥
अथऋग्वेदमंत्रप्रारंभः ॥ येभ्योमातामधुमत्पिन्वतेपयःपीयूषंद्यौरदि
तिरद्रिबर्हाः ॥ उक्थशुष्मान्वृषभरान्स्वप्नसस्ताँआदित्याँअनुमदास्वस्त
ये ॥ नमोमहद्भ्योनमोअर्भकेभ्योनमोयुवभ्योनमआशिनेभ्यः ॥ यजाम
देवान्यदिशक्नवाममाज्यायसःशंसमावृक्षिदेवाः ॥ असुनीतेपुनरस्मासु
चक्षुःपुनःप्राणमिहनोधेहिभोगं ॥ ज्योक्पश्येमसूर्यमुच्चरंतमनुमतेमृळ
यानःस्वस्ति ॥ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यः
शंसतेस्तुवतेधायिपज्रइंद्रज्येष्ठाअस्माँअवंतुदेवाः ॥ तमीशानंजगतस्त
स्थुषस्पतिंधियंजिन्वमवसेहूमहेवयं ॥ पूषानोयथावेदसामसद्वृधेरक्षि
तापायुरदब्धःस्वस्तये ॥ शरासःकुशरासोदर्भासःसैर्याउत ॥ मौंजाअदृ

ष्ट्वैरिणाःसर्वैःसाकंन्यंलिप्सत ॥ इहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतं ॥
क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे ॥ वसिष्ठासःपितृवद्वाचमक्रतदेवाँई
ळानाऋषिवत्स्वस्तये ॥ प्रीताइवज्ञातयःकाममेत्यास्मेदेवासोवधूनुताव
सु ॥ देवान्वसिष्ठोअमृतान्ववंदेयेविश्वाभुवनाभिप्रतस्थुः ॥ तेनोरासंता
मुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ इदंपितृभ्योनमोअस्त्वद्येतिन
मस्कारवतीमंततःशंसतितस्मादंततःपितृभ्योनमस्क्रियतेतदाहुर्व्याहा
वंपित्र्याःशंसे३त ॥ अव्याहावाँ३इति ॥ व्याहावमेवशंसेदसंस्थितंवैपितृ
यज्ञस्यसाध्वसंस्थितंवाएषपितृयज्ञंसंस्थापयतियोऽव्याहावंशंसतितस्मा
द्व्याहावमेवशंस्तव्यं ॥ १ ॥ उपह्वयेसुदुघांधेनुमेतांसुहस्तोगोधुगुतदो
हदेनां ॥ श्रेष्ठंसवंसवितासाविषन्नोभीद्धोघर्मस्तदुषुप्रवोचं ॥ हिंकृण्वती
वसुपत्नीवसूनांवत्समिच्छंतीमनसाभ्यागात् ॥ दुहामश्विभ्यांपयोअघ्न्ये

यंसावर्धतांमहतेसौभगाय ॥ इंद्रदृह्यामकोशाअभूवन्यज्ञायशिक्षगृण
तेसखिभ्यः ॥ दुर्मर्यवोदुरेवामर्त्यासोनिषंगिणोरिपवोहंत्वासः ॥ वाशी
मंतऋष्टिमंतोमनीषिणःसुधन्वानइषुमंतोनिषंगिणः ॥ स्वश्वास्थसुरथाः
पृश्निमातरःस्वायुधामरुतोयाथनाशुभं ॥ चतुष्कपर्दायुवतिःसुपेशाघृत
प्रतीकावयुनानिवस्ते ॥ तस्यांसुपर्णावृषणानिषेदतुर्यत्रदेवादधिरेभागधे
यं ॥ एकःसुपर्णःससमुद्रमाविवेशसइदंविश्वंभुवनंविचष्टे ॥ तंपाकेनमन
सापश्यमंतितस्तंमातारेळ्हिसउरेळ्हिमातरं ॥ सुपर्णंविप्राःकवयोवचोभि
रेकंसंतंबहुधाकल्पयंति ॥ छंदांसिचदधतोअध्वरेषुग्रहान्त्सोमस्यमिम
तेद्वादश ॥ पितुंनुस्तोषंमहोधर्माणंतविषीं ॥ यस्यत्रितोव्योजसावृत्रंवि
पर्वमर्दयत् ॥ स्वादोपितोमधोपितोवयंत्वाववृमहे ॥ अस्माकमविताभ
व ॥ उपनःपितवाचरशिवःशिवाभिरूतिभिः ॥ मयोभुरद्विषेण्यःसखा

सुशेवोअद्वयाः ॥ तवत्येपितोरसारजांस्यनुविष्ठिताः ॥ दिविवाताइवश्रि
ताः ॥ तवत्येपितोददतस्तवस्वादिष्ठतेपितो ॥ प्रस्वाद्मानोरसानांतुवि
ग्रीवाइवेरते ॥ त्वेपितोमहानांदेवानांमनोहितं ॥ अकारिचारुकेतुनात
वाहिमवसावधीत् ॥ यददोपितोअजगन्विवस्वपर्वतानां ॥ अत्राचिन्नो
मधोपितोरंभक्षायगम्याः ॥ यदपामोषधीनांपरिंशमारिशामहे ॥ वातापे
पीवइद्भव ॥ यत्तेसोमगवाशिरोयवाशिरोभजामहे ॥ वातापेपीवइद्भव ॥
करंभओषधेभवपीवोवृक्कउदारथिः ॥ वातापेपीवइद्भव ॥ तंत्वावयंपितो
वचोभिर्गावोनहव्यासुषूदिम ॥ देवेभ्यस्त्वासधमादमस्मभ्यंत्वासधमा
दं ॥ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥
कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः ॥ दृळहाचिदारुजेवसु ॥ अभीषु
णःसखीनामविताजरितॄणां ॥ शतंभवास्यूति[illegible] ॥ २ ॥ द्रविणोदाद्र

विणसस्तुरस्यंद्रविणोदाःसनंरस्यप्रयंसत् ॥ द्रविणोदावीरवंतीमिषन्नोद्र
विणोदारासतेदीर्घमायुः ॥ सवितापश्चातात्सवितापुरस्तात्सवितोत्तरा
त्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमा
युः ॥ उच्चादिविदक्षिणावंतोअस्थुर्येअश्वदाःसहतेसूर्येण ॥ हिरण्यदाअ
मृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः ॥ उद्गातेवशकुनेसामगायसि
ब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकु
नेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ याज्ययायजतिप्रात्तैवैयाज्या
पुण्यैवलक्ष्मीःपुण्यामेवतल्लक्ष्मींसंभावयतिपुण्यांलक्ष्मींसंस्कुरुते ॥ स्व
स्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिंसर्वगणंस्व
स्तयेस्वस्तयआदित्यासोभवंतुनः ॥ आदित्यउदयनीयःपथ्ययैवेतःस्व
स्त्याप्रयंतिपथ्यांस्वस्तिमभ्युद्यंतिस्वस्त्येवेतःप्रयंतिस्वस्त्युद्यंतिस्वस्त्यु

दधांति ॥ ऋध्यामस्तोमंसनुयामवाज ॥ ग्रामत्रसरथहापयात ॥ यशानप
कंमधुगोप्वंतराभूतांशोअश्विनोःकामंमप्राः ॥ सर्वामृध्विस्मृध्नुयामितितं
वैतेजसैवपुरस्तात्पर्यभवच्छंदोभिर्मध्यतोक्षरैरुपरिष्टाद्गायत्र्यासर्वतोह्वा
दशाहंपरिभूयंसर्वामृध्विमाश्नोत्सर्वामृध्विमृध्नोतियएवंवेद ॥ २ ॥ श्रिये
जातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाअमृ
तत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधातिसं
ततमृचावषट्कृत्यसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ शुक्रेभिरंगै
रजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ॥ शोचिर्वसानःपर्यायुरपांश्रि
योमिमीतेबृहतीरनूनाः ॥ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमी
वोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥ वास्तो
ष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्या

मपितेवपुत्रान्प्रातिनोजुषस्व ॥ वास्तोष्पतेशग्मयासंसदातेसक्षीमहिर
ण्वयागातुमत्या ॥ पाहिक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानः ॥
अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः ॥ ४ ॥
समुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृ
षभोरराद्ताआपोदेवीरिहमामवंतु ॥ याआपोदिव्याउतवास्रवंतिखनि
त्रिमाउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिह
मामवंतु ॥ यासांराजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधु
श्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमामवंतु ॥ यासुराजावरुणोया
सुसोमोविश्वेदेवायासूर्जमदंति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदे
वीरिहमामवंतु ॥ त्रायंतामिहदेवास्त्रायंतांमरुतांगणः ॥ त्रायंतांविश्वाभू
तानियथायमरपाअसत् ॥ आपइद्वाउभेषजीरापोअमीवचातनीः ॥ आ

पःसर्वस्यभेषजीस्तास्तेकृण्वंतुभेषजं ॥ हस्ताभ्यांदशशाखाभ्यांजिह्वावा
चःपुरोगवी ॥ अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ इमाआपः
शिवतमाइमाःसर्वस्यभेषजीः ॥ इमाराष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥
याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं ॥ ताभिरद्भिर
भिषिंचामित्वामहंराज्ञांत्वमधिराजोभवेह ॥ महांतंत्वामहीनांसम्राजंच
र्षणीनां ॥ देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ ५ ॥ उपास्मै
गायतानरःपवमानायेंदवे ॥ अभिदेवाँइयक्षते ॥ अभितेमधुनापयोथ
र्वाणोअशिश्रयुः ॥ देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशमर्व
ते ॥ शंराजन्नोषधीभ्यः ॥ बभ्रवेनुस्वतवसेरुणायदिविस्पृशे ॥ सोमा
यगाथमर्चत ॥ हस्तच्युतेभिरद्रिभिःसुतंसोमंपुनीतन ॥ मधावाधा
वतामधु ॥ प्रमंदिनेपितुमदर्चतावचोयःकृष्णगर्भानिरहन्नृजिश्वना ॥

अवस्यवोवृषणंवज्रंदक्षिणंमरुत्वंतंसख्यायहवामहे ॥ सूयवसाद्भगवती
हिभूयाअथोवयंभगवंतःस्याम ॥ अद्धितृणमघ्न्येविश्वदानींपिबशुद्धमु
दकमाचरंती ॥ ६ ॥ कनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावं ॥
सुमंगलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत् ॥ मात्वा
श्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोअस्ता ॥ पित्र्यामनुप्रदिशं
कनिक्रदत्सुमंगलोभद्रवादीवदेह ॥ अवक्रंददक्षिणतोगृहाणांसुमंगलोभ
द्रवादीशकुंते ॥ मानस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ प्र
दक्षिणिदभिगृणंतिकारवोवयोवदंतऋतुथाशकुंतयः ॥ उभेवाचौवदति
सामगाइवगायत्रंचत्रैष्टुभंचानुराजति ॥ उद्गातेवशकुनेसामगायसिब्रह्म
पुत्रइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभ
द्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ आवदंस्त्वंशकुनेभद्रमावदतूष्णी

मासीनःसुमतिंचिकित्विनः ॥ यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथे
सुवीराः ॥ ७ ॥ शतमिन्नुशरदोअंतिदेवायत्रानश्चक्राजरसंतनूनां ॥ पुत्रा
सोयत्रपितरोभवंतिमानोमध्यारीरिषतायुर्गंतोः ॥ अस्मिन्राष्ट्रेश्रियमावे
शयाम्यतोदेवीःप्रतिपश्याम्यापः ॥ दक्षिणंपादमवनेनिजेस्मिन्राष्ट्रइंद्रि
यंदधामि ॥ सव्यंपादमवनेनिजेस्मिन्राष्ट्रइंद्रियंवर्धयामि ॥ पूर्वमन्यम
परमन्यंपादाववनेनिजे ॥ देवाराष्ट्रस्यगुप्त्याअभयस्यावरुध्यै ॥ आपःपा
दावनेजनीर्द्विषंतंनिर्दहंतुमे ॥ अनृक्षराऋजवःसंतुपंथायेभिःसखायोयं
तिनोवरेयं ॥ समर्यमासंभगोनोनिनीयात्संजास्पत्यंसुयममस्तुदेवाः ॥
आनःप्रजांजनयतुप्रजापतिराजरसायसमनक्त्वर्यमा ॥ अदुर्मंगलीःप
तिलोकमाविशशंनोभवद्विपदेशंचतुष्पदे ॥ अघोरचक्षुरपतिघ्न्येधिशि
वापशुभ्यःसुमनाःसुवर्चाः ॥ वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतु

ष्पदे ॥ इमांत्वमिंद्रमीढ्वःसुपुत्रांसुभगांकृणु ॥ दशांस्यांपुत्रानाधेहिपति
मेकादशंकृधि ॥ सम्राज्ञीश्वशुरेभवसम्राज्ञीश्वश्र्वांभव ॥ ननांदरिसम्रा
ज्ञीभवसम्राज्ञीअधिदेवृषु ॥ समंजंतुविश्वेदेवाःसमापोहृदयानिनौ ॥ सं
मांतरिश्वासंधातासमुदेष्ट्रीदधातुनौ ॥ ८ ॥ परित्वागिर्वणोगिरइमाभ
वंतुविश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टांभवंतुजुष्टयः ॥ तान्वोमहोमरुत
एवयाव्नोविष्णोरेषस्यप्रभृथेहवामहे ॥ हिरण्यवर्णान्ककुहान्यतःस्रुचोब्र
ह्मण्यंतःशंस्यंराधईमहे ॥ दशावनिभ्योदशकक्षेभ्योदशयोक्त्रेभ्योदशयो
जनेभ्यः ॥ दशाभीशुभ्योअर्चताजरेभ्योदशधुरोदशयुक्तावहद्भ्यः ॥ तेअ
द्रयोदशयंत्रासआशवस्तेषामाधानंपर्येतिहर्यतं ॥ तऊसुतस्यसोम्यस्यांधं
सोंशोःपीयूषंप्रथमस्यभेजिरे ॥ तेसोमादोहरीइंद्रस्यनिंसतेंशुंदुहंतोअ
ध्यासतेगवि ॥ तेभिर्दुग्धंपपिवान्सोम्यंमध्विंद्रोवर्धतेप्रथतेवृषायते ॥

वृषावोअंशुर्नकिलारिषाथनेळावंतःसदमित्स्थनाशिताः ॥ रैवत्येवमहं
साचारंवस्थनयस्यंग्रावाणोअजुषध्वमध्वरं ॥ विश्वेत्तातेसवनेषुप्रवाच्या
याचकथंमघवन्निंद्रसुन्वते ॥ पारावतंयत्पुरुसंभृतंवस्वपावृणोःशरभाय
ऋषिबंधवे ॥ नीललोहितंभवतिकृत्यासक्तिर्व्यज्यते ॥ एधंतेअस्याज्ञा
तयःपतिर्बंधेषुबध्यते ॥ प्रतिचेतिचेत्येतद्वैसर्वस्वस्त्ययनंयत्प्रतिचेतिचे
तितद्योस्यप्रियःस्यात्तमेतेनानुमंत्रयेतप्रतिचेतिचेतिस्वस्त्येवगच्छतिस्व
स्तिपुनरागच्छति ॥ संगोभिरांगिरसोनक्षमाणोभगइवेदर्यमणंनिना
य ॥ जनेमित्रोनदंपतीअनक्तिबृहस्पतेवाजयाशूँरिवाजौ ॥ १ ॥ अक्षी
भ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वा
याविवृहामिते ॥ ग्रीवाभ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् ॥ य
क्ष्मंदोषण्यं१मंसाभ्यांबाहुभ्यांविवृहामिते ॥ आंत्रेभ्यस्तेगुदाभ्योवनि

छोर्हृदयादधि ॥ यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योविवृहामिते ॥ ऊरुभ्यां
तेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां ॥ यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृ
हामिते ॥ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्मादात्मन
स्तमिदंविवृहामिते ॥ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि ॥ यक्ष्मंस
र्वस्मादात्मनस्तमिदंविवृहामिते ॥ भद्राअग्नेर्वध्र्यश्वस्यसंदृशोवामीप्रणी
तिःसुरणाउपेतयः ॥ यदींसुमित्राविशोअग्रइंधतेघृतेनाहुतोजरतेदविद्यु
तत् ॥ स्वर्भानोरधयदिंद्रमायाअवोदिवोवर्तमानाअवाहन् ॥ गूळ्हंसूर्यंत
मसापव्रतेनतुरीयेणब्रह्मणाविन्ददत्रिः ॥ धामंतेविश्वंभुवनमधिश्रितमं
तःसमुद्रेहृद्यं१तरायुषि ॥ अपामनीकेसमिथेयआभृतस्तमश्यामममधुमं
तंतऊर्मिं ॥ १० ॥ भद्रोभद्रयासचमानआगात्स्वसारंजारोअभ्येतिपश्चा
त् ॥ सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभिराममस्थात् ॥ जज्ञानंस

समातरौविधामंशासतश्रिये ॥ अयंध्रुवोरयीणांचिकेतयत् ॥ योजागार
तमृचःकामयंतेयोजागारतमुसामानियंति ॥ योजागारतमयंसोमआह
तवाहमस्मिसख्येन्योकाः ॥ अग्निर्जागारतमृचःकामयंतेग्निर्जागारतमु
सामानियंति ॥ अग्निर्जागारतमयंसोमआहतवाहमस्मिसख्येन्योकाः ॥
जागर्षित्वंभुवनेजातवेदोजागर्षियत्रयजतेहविष्मान् ॥ इदंहविःश्रद्धया
नोजुहोमितेनपासिगुह्यंनामगोनां ॥ अधस्यायोषणामहीप्रतीचीवशम
श्व्यं ॥ अधिरुक्माविनीयसे ॥ सत्यासत्येभिर्महतीमहद्भिर्देवीदेवेभिर्य
जतायजत्रैः ॥ रुजद्दृळ्हानिदद्दुस्रियाणांप्रतिगावउषसंवावशंत ॥ प्रक्षो
दसाधायसासस्रएषासरस्वतीधरुणमायसीपूः ॥ प्रबाबधानारथ्येवयाति
विश्वाअपोमहिनासिंधुरन्याः ॥ आतूनइंद्रक्षुमंतंचित्रंग्राभंसंगृभाय ॥
महाहस्तीदक्षिणेन ॥ वास्तोष्पतेध्रुवास्थूणांसंत्रंसोम्यानां ॥ द्रप्सोभे

त्तापुरांशश्वतीनामिंद्रोमुनीनांसखा ॥ ११ ॥ देवानांनुवयंजानाप्रवो
चामविपन्यया ॥ उक्थेषुशस्यमानेषुयःपश्यादुत्तरेयुगे ॥ ब्रह्मणस्प
तिरेतासंकर्मारइवाधमत् ॥ देवानांपूर्व्येयुगेसतःसदजायत ॥ देवानां
युगेप्रथमेसतःसदजायत ॥ तदाशाअन्वजायंततदुत्तानपदस्परि ॥
भूर्जज्ञउत्तानपदोभुवआशाअजायंत ॥ अदितेर्दक्षोअजायतदक्षाद्वदि
तिःपरि ॥ अदितिर्ह्यजनिष्टदक्षयादुहितातव ॥ तांदेवाअन्वजायंतभ
द्राअमृतबंधवः ॥ यद्देवाअदःसलिलेसुसंरब्धाअतिष्ठत ॥ अत्रावोनृत्य
तामिवतीव्रोरेणुरपायत ॥ यद्देवायतयोयथाभुवनान्यपिन्वत ॥ अत्रा
समुद्रआगूळ्हमासूर्यमजभर्तन ॥ अष्टौपुत्रासोअदितेर्येजातास्तन्व१स्प
रि ॥ देवाँउपप्रैत्सप्तभिःपरामार्तांडमास्यत् ॥ सप्तभिःपुत्रैरदितिरुपप्रै
त्पूर्व्ययुगं ॥ प्रजायैमृत्यवेत्वत्पुनर्मार्तांडमाभरत् ॥ त्वंनोअग्नआयुषुत्वं

देवेषुपूर्व्यवस्वएकइद्भ्यसि ॥ त्वामापःपरिस्रुतःपरियंतिस्वसेतवोनभं
तामन्यकेसमे ॥ मोपुणःपरांपरानिर्ऋतिर्दुर्हणावधीत् ॥ पदीष्टतृष्णया
सह ॥ यज्ञायज्ञावःसमनातुतुर्वणिर्धियंधियंवोदेवयाउदधिध्वे ॥ आवो
वाचःसुवितायरोदस्योर्महेववृत्यामवसेसुवृक्तिभिः ॥ इतिऋग्वेदमंत्राःस
माप्ताः ॥ ॥ इतिहिरण्यकेशीयामंत्रसंहितासमाप्ता ॥

---

इदं पुस्तकं गोखलेइत्युपनामकेन लक्ष्मणात्मजमहादेवभट्टेनसंपाद्यदत्तं तदिद मुंबय्यां श्री. पांडुरंग जावजी श्रेष्ठिभिः स्वीये "निर्णयसागरा"ख्यमुद्रणालये मुद्रयित्वा प्रकाशितम्. शाकः १८५६. सन १९३४.

PUBLISHER –Pandurang Jawaji, PRINTER –Ramchandra Yesu Shedge, at the "Nirnaya-sagar" Press, 26-28, Kolbhat Lane, Bombay.

Vol. 83

# इति हिरण्यकेशीयामंत्रसंहिता।

याज्ञिकोपयोगीमंत्रसंग्रहः।